श्रीकामकोटिग्रन्थावलि: २१

श्री:

# श्री आख्याषष्टि:

व्याख्यासहिता





श्री श्रीधरवेङ्कटेश अय्यावाल्

श्रीकामकोटिर्विजयते

श्रीकामकोटिकोशस्थानेन प्रकाशिता
मद्रास्–कुम्भकोणम्

कोटिग्रन्थावलिः २१

श्रीः

श्रीचन्द्रमौलीश्वराय नमः

श्री अय्यावाळ् इति प्रसिद्धैः श्री श्रीधरवेङ्कटेशाभिधैः विरचिता

# आख्याषष्टिः

तिरुविशनल्लूर् श्री वीरराघवशास्त्रिभिः विरचितया

'भवरोगभेषज'—आख्यया टीकया संवलिता

श्रीमत्परमहंसपरिव्राजकाचार्य कामकोटि पीठाधीश्वर-

श्रीजगद्गुरु श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीचरणानां

श्रीमुखेन समुद्भासिता



श्रीकामकोटिविजयाय

श्रीकामकोटिकोशस्थानेन प्रकाशिता

(५७, मेल डबीर वीथी, कुम्भघोणम्)

(B. G. Paul & Co., G. T., Madras.)

स्वाम्यं कोशस्थानस्यैव ] 1948 [मूल्यं दश आणकाः

श्रीः

श्रीचन्द्रमौलीश्वराय नमः

श्री अय्यावाळ् इति प्रसिद्धैः श्री श्रीधरवेङ्कटेशाभिधैः विरचिता

# आख्याषष्टिः

तिरुविशनल्लूर् श्री वीरराघवशास्त्रिभिः विरचितया

'भवरोगभेषज'—आख्यया टीकया संवलिता

श्रीमत्परमहंसपरिव्राजकाचार्य कामकोटि पीठाधीश्वर-

श्रीजगद्गुरु श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीचरणानां

श्रीमुखेन समुद्भासिता





श्रीकामकोटिविजय[illegible]

श्रीकामकोटिकोशस्थानेन प्र[illegible]शि[illegible]

(५७, मेल डबीर वीथी, कुम्भघो[णम्])

(B. G. Paul & Co., G. T., Madras.)

स्वाम्यं कोशस्थानस्यैव ] 1948 [मूल्यं दश आणकाः

॥ श्रीः ॥

20-4

# श्रीमत्परमहंस परिव्राजकाचार्यवर्य-
# श्रीमच्छंकरभगवत्पादप्रतिष्ठित-
# श्रीकाञ्ची कामकोटिपीठाधिपजगद्गुरु-
# श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीपादैः
# क्रियते नारायणस्मृतिः

विदितमेव हि सर्वैः लोकं च दुःखपङ्कनिमग्नमुद्दिधीर्षवः अपरोक्षीकृतधर्माणः दिगन्तविख्यातयशसः अय्यावाळ् इति सुप्रसिद्ध-नामानः आख्याषष्टिरिति स्तोत्ररत्नं रचयामासुरिति। तदीयग्रामवासिभिः संपादितां भवरोगभेषजाख्यां अन्वर्थनामालङ्कृतां व्याख्यामवलोक्य परं सन्तुष्यामः। व्याख्या चेयं भक्तलोकानां सुलभतया तदर्थमधिगन्तुमुप-काराय महते कल्पते। ग्रन्थेनानेन भक्तलोकः परं निःश्रेयसमधिगच्छतु इत्याशास्महे ॥

सर्वधारी सं—चैत्रशु—९
सौम्यवासरे

नारयणस्मृतिः ॥

Sreevathsa Press, Madras 14, C. 350. D. 7—5—48.

204

## INTRODUCTION

It was one of the desires of my late revered Professor, Mr. Kuppuswami Sastrigal, that I should help his old friend and classmate Sri S. Ramaswami Sastrigal of Tiruvisanalloor to bring to light the commentary written by the latter's father, Sri Viraraghava, on the celebrated hymn of Sri Ayyaval, the Akhyashashti. It is a matter for congratulation for both myself and Sri Ramaswami Sastrigal that, though after some years of difficulty of every nature, we have been able to offer to the public an edition of the Akhyashashti with the said commentary. Considering the insuperable difficulties of war-time controls over paper and publication, it should be mentioned that but for the gracious command of our ever benevolent Acharya of Kamakoti and the kind willingness of the late Sri. D. Balasubrahmanya Aiyar, Proprietor of B. G. Paul & Co., to include it in the Kamakoti Series, this work would not have seen the light of day.

We had only one manuscript of the commentary kindly given to Sri Ramaswami Sastrigal by the late Vidyaratna Pandit K. R. Visvanatha Sastrigal of Kanadukattan to guide us. My diligent search for mss. of it in the Mss. Libraries could unearth only a few pages of the beginning of this commentary extending up to the first verse of the hymn, mixed up with the commentary on the Akhyshashti by one Venkatesa, contained in a ms. in the Adyar Library. In view of the different readings which even this fragment in the Adyar Library ms. offered and of the many defective lines

in the ms. on our hand, it would indeed have been a great help if a second full ms. of the work had been secured.

The author Viraraghava of Kaundinya gotra of Tiruvisanalloor on the banks of the Cauvery in the Tanjore Dist. describes himself in the introductory verses as the son of Isvara and Kamakshi and disciple of Sri Ramachandra yati. Sri S. Ramaswami Sastrigal, his son, gives the date of the author as *circa* 1820—1882 A.D. An examination of the Mss. Catalogues of the Government Oriental Library, Madras and the Sarasvati Mahal Library, Tanjore shows that the author Viraraghava wrote also two plays, the Valli parinaya nataka (Madras Government Ori. Mss. Library D. No. 12643) and the Ramarajyabhisheka nataka (Madras Government Ori. Library, D. Nos. 12634-5 and Sarasvati Mahal, Tanjore, Nos. 4708-9). The prologues in these plays also mention his parents as Isvara and Kamakshi, his native place as Tiruvisanalloor or Sahaji maharajapuram and his gotra as Kaundinya. In the latter, Krishna Bhupala is referred to as the Sabhanayaka, while in the former, said to be staged before the village Siva deity Kuleeresvara, mention is made of King Sivaji of Tanjore, 1832-1855 A.D. There is a hymn of hundred verses on Parvati in the Madras Government Oriental Library, (D. No, 9600) by an author Viraraghava of Sahajirajapura, who may be identical with our Viraraghava Sri K. R. Subrahmanyam is wrong when he ascribes the two plays above mentioned, as also the Parvati stotra, to the Viraraghava of the time of Sahaji of Tanjore, an ancestor of the present author. (Mahratta Rajahs of Tanjore, p. 33).

It is needless to emphasise the importance which devotees attach to the writings of Sri Ayyaval (Sridhar.

Venkatesa), particularly to his hymn of sixty verses on the Lord's Name, Akhyashashti. Attention may be drawn here to my detailed introduction to the Akhyashashti which I brought out in the Kamakoti series sometime back. In the introductory verses in his commentary, Viraraghava, a native of the same village from which Sri Ayyaval hailed, refers not only to the esteem in which Sri Bodhendra and Sadasiva Brahmendra, themselves Sannyasins of high spiritual attainment, held Sri Ayyaval, but to the miracles of Sri Ayyaval bringing rain and bringing back a child with his hymns Kuleeresa stotra and the Taravalistotra, and the more widely known incident of Ayyaval and the hunger-stricken chandala.

Sri Ayyaval is one of those saints who had entered the pantheon of the Bhajana matha, and a verse sung on the saint by the Bhagavatas was given by me in the introduction to Akhyashashti referred to earliar. I may add here a Telugu song sung by the devotees on this saint, which I discovered in a music ms. secured by me from the village of Vaiyacheri from the house of some descendents of the composers Anai-Ayya.

रागः—भैरवी

मनसा श्रीधर वेङ्कटेश्वर गुरुनि
महिमलु दलन्सु कांम्मिड—ओ (मनसा)
मुनु नीवु चिरकालमुलु श्रीहरि कीर्तन
जेसिनन्दुकु फलमनुसु—इदे परमतारकमनि
कलिकल्मषुलेल्ल तीरु निन्
गलुगुचेयुसुमा यनुसु ओल्लबोरु

सुलभमु भक्ति मीरियदि
सुखंबनि मरि—एवरुनु तेलिय
लेरु नीवु कोरि तेलियवु (मनसा)

It is but natural that the Akhyashashti of this great soul was the subject of constant and detailed study. One Venkatesa, whose work is preserved in a ms. in the Adyar Library, wrote an elaborate exposition of the hymn, dividing it into four Tarangas and designating his work as Madhurya-Jhari or the Wave of Sweetness. The commentary that is published here is also a very detailed one, explaining even grammatical and rhetorical points. Its main feature is the number of alternative explanations it frequently offers which, though sometimes out the way, have a value of their own for spiritual suggestiveness and helpfulness to the devotee, justifying its name Bhava roga bheshaja. May it help us as a true medicine to cure our ills of Samsara !

Mahodaya
9—2—48.

V. RAGHAVAN.

॥ ओम् ॥

# ॥ श्रीश्रीधरवेङ्कटेशविरचिता आर्याषष्टिः ॥

## ॥ श्रीवीरराघवसुधीविरचित—भवरोगभेषजाख्यव्याख्यासहिता ॥

मू० ॥ शिवं परमकल्याणमव्याजकरुणानिधिम् ।
तदाख्यां सौख्यजननीं वन्दे वक्त्रार्तिहारिणीम् ॥ १ ॥

शिवाख्ये नो जाने शिवमितरदेवानपि जन-
न्ययं कामी कासावहमहह दिष्ट्या तु भवतीम् ।
समीक्षे मत्सर्वश्रममुषमिहामूकसुलभां
स्वलब्धस्वाधीनाखिलभुवनसाम्राज्यविभवाम् ॥ २ ॥

॥ वेधोमुखसौधोपरिविलासिन्यै नमः ॥

वाग्देवतां भगवतीं गणनाथमम्बां
शम्भुं सरोजनयनं सहितं श्रिया च ।
गीर्वाणकोटिमकुटीमणिमण्डलांशु-
चित्रीकृताङ्घ्रिसरसीरुहमानमामि ॥

यत्सेवारसलालसेन मनसा वीतागसस्तापसा
यद्दोर्दण्डपराक्रमस्मरणतो दूरीभवत्साध्वसाः ।
यत्सौन्दर्यविलोकनेन गलितव्रीडा विमुच्याखिलं
सम्भोगं भुवि वव्रुरद्य हृदये रामो मम क्रीडतु ॥

शिवोद्गीतं काश्यां दिवि यदभिधानं सकलम-
प्यघं श्रुत्वा दन्तावल इव मृगेन्द्रस्य निनदम् ।
प्रधावत्यस्माकं हृदि च रसनायां रघुपते-
र्विहारं सोत्कण्ठं विरचयतु तस्य प्रभुमणेः ॥

प्रकृत्या तुल्यौ तावपि हरिहरौ प्रत्ययभिदा-
वशाद्भेदं प्राप्तौ सकलजनचेतोनयनयोः ।
समार्थौ च श्यामार्जुनगुणसमेतावपि शुचि
स्वभावौ मच्चेतः स्मरति दुरितध्वंसविधये ॥

विद्याविलासविपुलीकृतमङ्गलानां
वीक्षाविशेषविमलीकृतशिष्यकाणाम् ।
श्री**रामचन्द्रयति**वर्यधुरन्धराणां
पादारविन्दयुगलं प्रणमामि नित्यम् ॥

कलये कमपि किशोरं करधृतनवनीतमद्भुताकारम् ।
कमनीयगोपवेषं करुणारसवारिधिं जगद्वपुषम् ॥

प्रह्लादभागधेयं प्रशमधनौघानिशानुसन्धेयम् ।
प्रणताभयदं नृणां प्रविशतु चेतो ममाद्य धूतारि ॥

गौरीसनाथमेकं गजमुखशरजन्मनामशुभतोकम् ।
शिरसा धृतशशिलेखं शिवमालोके हृदानमल्लेखम् ॥

वैयाकरणाभिनन्द्यान्वेदान्तार्थानुभूतिधूताघान् ।
प्रणमामि **तातपादानीश्वरनाम्नश्च मातृकामाक्षीम्** ॥

**बोधेन्द्रो**ऽसौ यतीन्द्रो हरिभजनसुधास्वादकर्मण्यतन्द्रो
यन्माहात्म्यं **कुलीरेश्वरनुति**शमितावग्रहालोकनेन ।
कश्चिद्विप्रः **सुतारावलिनुति**पठनत्रातपुत्रावलोके-
नाजानद्धृथपद्येन च सपदि **सदा**शब्दपूर्वः **शिवो**ऽपि ॥

क्षुत्प्राणान्खदते शिवेति रुदते भिस्सा प्रदत्तेति य-
श्चण्डालाय निजाग्रहारसुमनोवृन्देन सन्निन्दितः ।
तत्पापक्षतये प्रहिं गमितवान् गङ्गां तरङ्गोत्तरां
श्रीमच्छ्री**धरवेङ्कटेश्वर**सुधीश्रेष्ठाय तस्मै नमः ॥

यथामति **श्रीधरवेङ्कटेश-**
विपश्चि**दाख्यास्तवनस्य** टीकाम् ।
यते विधातुं स्मृतशङ्कराङ्घ्रिः
स **वीरशब्दादिमराघवो**ऽहम् ॥

अत्रास्पष्टपदार्थरूपणमलङ्कारो ध्वनिः प्रक्रिया
सुप्तिङ् तद्धितकृत्तदन्तवचसां केषांचिदाख्यायते ।
शब्दानां सदृशां पुनर्विवरणं चैकत्र सर्वत्र चा-
भिप्रायप्रथनं सुविस्तरभियान्येषामनालेखनम् ॥

महद्भिर्विद्वद्भिर्भगवदभिधानप्रणयिभिः
कृतायाः कारुण्यात्त्रिजगति शिवाख्यावरनुतेः ।
अयं व्याख्यां कर्तुं सपदि यतते दुग्धजलधे-
र्विबोद्धुं गाम्भीर्यं सुरसभरितं टिट्टिभ इव ॥

अत्र तावदतिदुर्वारगर्वनिर्वापितसर्ववर्णाश्रमधर्मनियामकश्रुति-पाठस्य दूरीकृतश्रुत्यर्थबोधानुष्ठानस्य दुष्कृतौघसिंहासनारूढस्य कलिमहा-राजस्य दुराज्ञया निवारितसन्मार्गसञ्चारस्य अश्रद्धादिव्याहतश्रुतिस्मृतीति-हासादिप्रदीपस्य अनासादितात्मदर्शनस्य अनुक्षणोपचीयमानद्वैतान्धकारस्य सर्वजनस्य सन्त्रासनिरासाय सुखेन संसारतरणमार्गप्रदर्शनाय च सरभसदयं श्रीशिवाख्यास्तवमारभमाणः श्रीवेङ्कटेश्वरविद्वच्चरणः सर्वश्रममोचकत्वेन सर्वैश्वर्यप्रापकत्वेन च गुरुवन्दनं कर्तुकामः श्लेषभङ्ग्या शिवाख्यां मातरं च स्तौति **शिवाख्य** इत्यादिना । अयि जननि मातः शिवा च स आख्या च तस्याः सम्बुद्धिः । अन्यथाविग्रहे तु श्रुतिस्मृतीतिहासपुराणानां व्याकोपः प्रसज्येत । तथाहि—शिवेत्याख्या शिवाख्या इति पक्षे शिवशब्दमात्रस्य सङ्कीर्तनीयत्वं सम्भवति । न तु महादेवादिनाम्नाम् । षष्ठीतत्पुरुषपक्षे लक्षणादोषः । हरिनाम [म्नां] कीर्तनीयत्वासम्भवश्च । अतः कर्मधारयपक्ष एव सुवचः । "ध्रुवासो अस्य कीरयो जनासः.... ........बृहत्ते विष्णो सुमतिं भजामह" (ऋ. २.२.२६) इत्यन्ता श्रुतिः "तमुष्टुहि" इत्यारभ्य 'सर्वानवयजामह' इत्यन्ता श्रुतिः । तथा च **मनुः**—'ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।' इत्यादि ।

**भगवद्गीता** च—' सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ' ॥९-१४॥

व्यासश्च—' रामो रामो राम इति कीर्तयन्ति जनाः सदा ।
सर्वलोकाधिनाथे तु रामे राज्यं प्रशासति ॥

नारदश्च—' हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ' ॥

' एकान्तनिष्कृतिः शम्भोः सकृदेव हि कीर्तनम् ' ॥
इति पुराणम् ।

**सहस्रनामभाष्ये** च **भगवन्नामविभूषणा**दिग्रन्थेषु च हरिहरनाम्नां महत्त्वं बहुशो निरूपितमित्यत्र विशेषतो न लिखितम् । शिवमुमासहायम् । इतरदेवान् लक्ष्मीसहायादीन् । अपि किंचिदपीत्यर्थः । 'अपिः पदार्थसम्भाव....ने'त्यनुशासनात् । नो जाने मत्संरक्षकत्वेन न पश्यामि । ज्ञाधातोर्लडात्मनेपदम् । अनेकजन्मार्जितसुकृतपरिपाकविशेषेण मत्सर्वश्रममुषं मम जीवस्य सर्वश्रमं समस्तदुःखं मुष्णातीति क्विप् । 'य आत्माऽपहतपाप्मा' इति श्रुतेः (छा. ८. ७) । अन्यत्र आम्नाय्यं देवताप्रार्थनादिभिः पुत्रस्य सर्वपापमोचिकाम् । अमूकसुलभाम् । न मूका अमूकाः तेषां सुलभां सुखेन लब्धुं कीर्तयितुं योग्याम् । मूकानां तु भूम्यादौ विलिख्य तच्च हृदये स्मरतां जन्मान्तरे सुलभामित्यर्थः । अन्यत्र अमूकानां स्वाभिमतनिर्वाहायाह्वानयोग्याम् । मूकानां हस्ताभिनयादिभिः स्वाभिमतसिद्ध्यर्थं अभिमुखीकरणयोग्याम् । स्वस्या आख्याया

लब्धारः कीर्तकाः तेषां स्वाधीनाः स्वायत्ताः । ‘अधीनो निघ्न आयत्त’ इत्यमरः । अखिलभुवनस्य समस्तजगतः सम्राजो भावः साम्राज्यम् । ब्राह्मणादित्वात्ष्यञ् । तद्वृत्त्यसाधारणधर्म इति यावत् । तस्य विभवः समृद्धिर्यस्यास्ताम् । अन्यत्र पुत्रस्य प्राचीनसम्प्रदायशास्त्रानुष्ठानोपदेशे इष्टप्राप्त्यनुकूलव्यापारप्रवर्तिकामित्यर्थः । भवतीं त्वां तु । ‘तुस्स्याद्भेदेऽवधारणे’ इत्यमरः । त्वामेवेत्यर्थः । समीक्षे सम्यक् जाने । ‘ईक्ष दर्शने’ इति लडात्मनेपदम् । अतो मुख्यकारणभिन्नत्वेन विप्रकृष्टाः शिवादयः क्व । अन्यत्र पित्रादयः क्व कुत्र । सर्वेषां कारणविज्ञानेन कार्यविज्ञाने अस्वरसः इति भावः । असौ अहं क्व । शिवादिव्यक्त्युपासनायां अस्वारस्येन ज्ञातकारणः अहं क्वेत्यर्थः । अहह महामूढेन मयाप्याख्या लब्धेत्याश्चर्ये । ‘अहहेत्यद्भुते खेदे’ इत्यमरः ॥

अथवा एतत्त्रयमपि विधेयविशेषणम् । यथा बाल्ये विवेकासम्भवेऽपि जीवधारणाय मातृस्तन्यपाने प्रवर्तते शिशुस्तद्वत् विवेकशून्योऽप्यहं पूर्वपुण्यविशेषेण संसारश्रमनिवृत्तये त्वामेव सम्यक् पश्यामीति भावः । शिवं नो जाने! जानाम्येवेति काकुः । त्वद्दर्शनेनाहं सर्वदर्शी जात इति भावः । ‘एवं सोम्य स आदेशो भवति’ इति श्रुतेः (छा—६—१) । ‘एकविज्ञानेन सर्वं विज्ञातं भवति’ इति च । यथान्यत्र मातृमुखेन शिशुर्मातृपितृबन्धून् जानाति तथा । अतस्त्वद्विज्ञानविज्ञाताः शिवादयः क्व । अहं कारणरूपत्वद्विज्ञानविधूतसर्वप्रपञ्चवासनः क्व । पार्थक्येन शिवादिव्यक्तिदर्शनसंरम्भो न कदापीति भावः । अहह! महामूढस्य ममापि सर्वज्ञताभेदबुद्धिमत्त्वं चेत्याश्चर्ये ॥

यद्वा शिवं मङ्गलं नो जान इति काकुः। इतरदेवान् त्वद्व्यतिरिक्तदेवानपि लक्षणया तद्भावमपि अये प्राप्नोमि। 'अयवय गतौ' लडात्मनेपदम्। त्वत्साक्षात्करणे योगिनामिव ममापि ब्रह्मभावः सुलभ इति भावः। अतोऽमी देवाः क। कारणज्ञानजनितसर्वभावनैराश्यः अहं क। सर्वदेवापेक्षया नामभक्तस्यातिशयो व्यज्यते। तेषां मम च क्रियान्विशेष इति भावः। अतोऽस्मरणीया अपि शिवादिव्यक्तयः प्रतिषेधार्थं स्मरणीया जाता इत्यहहार्थः खेदः। 'नेह नानास्ति किंचन' इति श्रुतेः (बृ. ४. ४)। विशेषणत्रयसामान्येन 'सत्यं ज्ञानमनन्तं' (तैत्ति. २. १. १) इति लक्षणलक्षितब्रह्मत्वमाख्याया गम्यते।

यद्वा अये जननि भवतीं शिवम् इतरदेवानपि विधेयविशेषणविशिष्टान् नो जाने। किं तु मत्सर्वश्रममुषमित्यादिविशेषणत्रयविशिष्टान् समीक्षे। अतोऽमी क। असावहं क। तेषां मम चोपास्योपासकतामूलकपोष्यपोषकतासम्बन्धाभावद्योतकं क्वेत्यव्ययद्वयम्। अहह। उपास्योपासकभ्रान्त्या सर्वे विमुह्यन्तीत्याश्चर्यं खेदो वा। तर्हि तत्र किं वा जानासीत्यत आह किंत्विति। भवतीं विशेषणत्रयविशिष्टां समीक्षे। केवलमानुषयत्नं विना दैवबलेन त्वज्ज्ञानापत्तेः समीक्षाक्रियाप्यतीव सङ्गच्छत इति भावः। अन्यथा एकतिङा श्लोकान्वये समर्थनीये तिङन्तरस्य वैयर्थ्यापत्तेः। ब्रह्मसाक्षात्कार एव समीक्षाक्रियाप्युपपद्यते। अतो नाम्नो ब्रह्मत्वं सिद्धम्। तथा च श्रुतिः—'नामैवैतन्नामोपास्वेति' (छा.७.१)। यथा मातृहस्तेन भोजनं पुत्रस्यानुकूलं भवति न तथा स्वसेवानुगुण्येन इतरदत्तं

भवति तद्वदिति भावः । 'मातृदेवो भव' (तैत्ति. १. ११. १२) । इत्यस्यां श्रुतौ पूज्यानां मध्ये प्रथमं मातृपदोपादानाच्च । 'त्वमेव माता च पिता' इत्यत्र रक्षकाणां मध्ये प्रथमं मातृपदोपादानाच्च । नानात्वं विहाय ऐहिकामुष्मिकसुखानुभूतये शिवाख्यैवोपास्येति भावः । अत्र आख्याजनन्युभयमूलकानेकाश्रयणेन श्लेषालङ्कारः । 'नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रितः' इति । अनेन वाक्यार्थरूपवस्तुना प्रपञ्चस्याख्यासत्तातिरिक्तसत्ताभावकत्वं व्यज्यते । शिखरिणीवृत्तम् ॥

प्रथमश्लोकेन शिवाख्याया ब्रह्मत्वमुपपाद्यान्योपासनोपालम्भपूर्वकं शिवाख्याभजनविधानमेव द्वितीयश्लोकेन साधयति—

**स्वकीयैः स्रोतोभिर्जगदखिलमाक्रामति कलौ**
**निमग्नास्ते वर्णाश्रमनियतधर्माः स्फुटमिदम् ।**
**प्रलीना ध्यानादिर्भजनस्मृतिरेका पुनरये**
**परित्रातुं विश्वं पुरभिदभिधे त्वं विजयसे ॥३॥**

**स्वकीयै**रिति । कलौ युगे युगानामन्त्यत्वम् अपकर्षद्योतकं यथा वर्णानामन्त्यत्वं जघन्यजातिद्योतकम् । अनेन कलिदोषः सूच्यते । स्वकीयैः स्वसम्बन्धिभिः । सम्बन्धे स्वस्य चेति कुक् । स्रोतोभिः कामक्रोधादिभिर्विविधैः पापैर्वा । अखिलं जगत् कर्मलोकं आक्रामति व्याप्नुवति सति । अनेन देशदोषः सूच्यते । यथा नीचभूयिष्ठः प्रदेशः न किमपि कर्म वैदिकमर्हति । तथा युगत्रयप्रसिद्धा वर्णाश्रमाश्च ब्राह्मणादिवर्णा ब्रह्मचर्याद्याश्रमाश्च । तेषां नियता अवश्यकर्तव्यत्वेन विहिता धर्मा

अग्निहोत्रादयः। निमग्ना अपरिदृश्यमानाः। अस्मिन्युगेऽपि यः कश्चन करोतीत्यर्थः। अनेन अधिकारिणां प्रायः चित्तकालुष्यं सूच्यते। एतेन नामकीर्तनव्यतिरिक्तसर्ववैदिककर्मणां देशकालाधिकारिदोषभाववत्वं विवक्षितमिति गम्यते। अतः कर्म न करोतु योगमनुतिष्ठत्वित्याशङ्कायां न तदपि सम्भवेदित्याह—प्रलीनेति। ध्यानादिः। ध्यानमुपास्यविषयकचित्तवृत्तिनिरोधः। आदिः पूर्वं यस्याः सा भजनसृतिः। तद्गुणसंविज्ञानो बहुव्रीहिः। ध्यानं समाध्यादिरपीत्यर्थः॥

भजनं त्रिविधम्—मानसिकं ध्यानं तदेव योग इत्युच्यते। कायिकं पूजनवन्दनादि। वाचिकं नामकीर्तनादि। तत्र प्रलीना प्रकर्षेण नष्टा। भूमौ तावन्मार्गो बहुप्रयासपरिष्कृतः। स तु परिमितदेश उत्कूलप्रवाहे शिथिलीभवति। पुनरेष कण्टकादिभिर्यथा प्राप्यदेशप्रापको न भवति तथा। तथा चार्षं वचनम्—'चित्तैकतानता ध्यानम्' 'योगो नष्टः परन्तप' (गी० ४.२.) इति। कायिकादिकर्मापेक्षया चित्तसमाधानात्मकध्यानस्यातिश्रमसाध्यत्वात्तत्कर्तॄणां पूर्वयुगेष्वपि विरलत्वात् तत्सम्प्रदायज्ञानामिदानीमसम्भवाच्च योगस्याल्पत्वम्। तर्हि संसारतरणायास्मिन्युगे किमस्तीत्याशङ्कायामाह—एकेति। अयं पुरभिदभिधे पुराणि स्थूलसूक्ष्माज्ञानशरीराणि तानि भिनत्ति वारयतीति तथा। सा चासावभिधा च। तस्याः सम्बुद्धिः। त्वमेका सती। 'यत्र नान्यत्पश्यति' (छा० ७.२४.१.) इति श्रुतेः अद्वैतं नामब्रह्मेति यावत्। विश्वं सर्वमपि जनं परित्रातुं रक्षितुं विजयसे सर्वोत्कर्षेण वर्तसे। विपराभ्यां

जेरिति आत्मनेपदम् । आविद्यकशरीरस्य नामब्रह्मोपास्तिनिवर्त्यत्वात्सर्वेषां आख्यैवोपास्येति भावः । इदं पूर्वोक्तम् । स्फुटं निश्चितम् । तथा च **नारदीये**—'हरेर्नामैव नामैव' इति । **भागवते** च—'कलेर्दोषनिधे राजन्नस्ति ह्येको गुणो महान् । कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्' [इति] ॥ **विष्णुपुराणे** च—'ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्' इति । श्रुतिश्च—'आस्य जानन्तो नामचिद्विविक्तन' इत्यादिः । 'यः शिव इति वाचं विसृजेत् तेन संवसेत्' इत्यादिश्रुतिश्च । पुराणान्तरे च—

'रामेति वर्णद्वयमादरेण सदा जपन्मुक्तिमुपैति जन्तुः ।
कलौ युगे कल्मषमानसानामन्यत्र धर्मे खलु नाधिकारः' [इति] ॥

**भारते** च—'एष मे सर्वधर्माणाम्' (वि. सहस्रनाम.- ) इत्यादि । अनेन नामकीर्तनरूपस्य धर्मस्य देशकालाधिकारिदोषो नास्तीति गम्यते । तथा च **सहस्रनामभाष्ये** च **भगवत्पादै**रुपपादितम् । अत्र भजनद्वयमपि निराकृत्य शिवाख्याकीर्तनरूपधर्मस्यैव सर्वोत्कृष्टत्वेन दर्शितत्वात् परिसङ्ख्यालङ्कारः । 'परिसङ्ख्या निषिद्ध्यैकमेकस्मिन्वस्तुयन्त्रणम्' इति । अत्र प्रस्तुतशिवाख्याकीर्तनोत्कर्षेण अप्रस्तुतजलनिधिनिमग्नसमुत्तरणसाधननौकाप्रतीतेः समासोक्तिर्व्यज्यते । 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' इति ॥

आद्यश्लोकेन शिवाख्याया ब्रह्म [त्व] साधनेन सह तत्स्मृतिमतां सर्वज्ञत्वमपि प्रदर्श्य, द्वितीयेन सर्वधर्मेषु देशकालाधिकारिदोषनिरूपणेन

सह शिवाख्याभजनस्यैवावश्यकत्वं प्रतिपाद्यानेन श्लोकेन शिवशब्दबोध्यहरिहरादिव्यक्त्युपासननिषेधपूर्वकं शिवाख्याभजनेनैवाप्तकामतां दर्शयति—

**शिवाख्ये वाच्योऽर्थस्तव हि पुरभिद्वास्तु मुरभित्**
**स लोकानामीष्टामवतु च सुखेन श्रितजनम् ।**
**अलं नाहं तस्यानुस्मृतिषु स मा भूदपि च मे**
**श्रितोऽहं त्वां यत्त्वद्भवति मम कल्याणि तदलम् ॥४॥**

**शिवाख्य** इति । हे शिवाख्ये तव हि वाच्यो बोध्योऽर्थः वस्तु 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । पुरभित्पुरासुरहन्ता । मुरभिन्मुरासुरहन्ता । देहलीदीपन्यायेन वाकारस्योभयत्र सम्बन्धः । अस्तु भवतु । 'अस भुवी'त्यामन्त्रणे लोट् । 'स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्' इति श्रुतेः । **विष्णुसहस्रनामादिष्वपि** शिवनाम्नः स्थितत्वेन वाच्यार्थस्य निर्णयाभावात् विनिगमनाविरहाच्च । पदवाच्यार्थेन लोकानामीष्टामीश्वरो भवतु । 'ईश ऐश्वर्य' इति पूर्ववल्लोडात्मनेपदम् । अनेन स्वस्य लोकग्राह्यत्वमुक्तं भवति । तथा च **भागवते**—'उन्मत्तवन्नृत्यति लोकग्राह्य' इति । "उपेक्ष्य लोकै"रिति वक्ष्यमाणत्वाच्च । श्रितजनमुपासकम् । सुखेनानायासेन । 'प्रकृत्यादिभ्य' इति तृतीया । अवतु रक्षतु । 'अव रक्षण' इति पूर्ववल्लोट्परस्मैपदम् । एतच्छिवादिव्यक्त्युपासनासमर्थभाषितमित्याशङ्कायामाह अहमिति । सर्वोपासनसामर्थ्यद्योतकोऽहङ्कारवादः । जीवस्य कर्तृत्वभोक्तृत्वविशिष्टत्वात् । तस्य वाच्यार्थस्यानुस्मृतिषु वासनादिषु विषये ।

न अलं समर्थ इति काकुः । भवामीत्यध्याहार्यः । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति अत्र सप्तमी साधुः । तर्हि उपास्यतामित्यत आह— त्वदिति । हे कल्याणि कल्यः पापनिवारणसमर्थः अणनं अणःशब्दः यस्या इति तस्याः सम्बुद्धिः । 'बह्वादिभ्यश्चे'ति ङीप्, सुखेन संसारतारकध्वनिमतीति यावत् । त्वत् त्वां विहाय । 'ल्यब्लोपे पञ्चमी' । यत्फलं भवति जायते तत् अलं मास्तु । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । तत्कुतः त्वामिति । त्वां श्रित. त्वदाश्रितस्य अन्यन्नश्वरफलं मास्त्विति भावः । अत एव कवेर्लोकबाह्यत्वमपि सङ्गच्छते । अत्र कल्याणीशब्दस्य निरुक्तत्वान्निरुक्तिः । शिवादिभ्यस्त्युपासनं निषिध्याख्याभजनस्य नियमितत्वात्परिसङ्ख्या । 'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्' इति । तयोरङ्गाङ्गिभावेन सङ्करः ॥

यद्वा हे शिवाख्ये कल्याणि मङ्गलरूपिणि । तव वाच्यार्थः पुरभिन्मुरभिद्वास्तु हि । वाकारोऽनादरे । हिः प्रसिद्धो । स वाच्यार्थो लोकानां ईष्टामुपास्योपासकभावेनेत्यर्थः । श्रितजनं सुखेनावतु । विरोधिनं हन्त्विति वाच्यार्थः । ईश्वरस्य रक्षणाद्यधिकारित्वात् । तस्यानुस्मृतिषु अवलम्बननिषेधे नेति काकुः । ब्रह्मनिष्ठस्य अन्योपासनायां प्रत्यवायश्रवणात् । युगानुगुणत्वाच्चान्यधर्माणाम् । 'महाजनो येन गतः स पन्थाः' इति न्यायेन सर्वजनोपास्यमानशिवादय एव तस्याप्युपास्या भवन्त्वित्याशङ्कायामाह—सोऽपीति । सोऽपि मे मा भूत् । अहं मे मा भूत । लक्षणया ईश्वरत्वमहन्ता च मे मा भूदिति पर्यवसानार्थः ।

'भूसत्तायामि'ति लुङि परस्मैपदम् । उपास्योपासकत्वासम्भवे संसारतरणं कथं भवेदित्याशङ्कायामाह—अहमिति । अहं त्वां श्रितः त्वद्भेदं प्राप्त इति यावत् । त्वदैक्यं ममालं भवति । तत्कुतः । त्वदिति । त्वदन्य-द्विजातीयमित्यैक्यमित्यर्थः । 'त्वत्त्वशब्दावन्यवाचिना' वित्यनुशासनात् । 'न च पुनरावर्तते' (छा० ८. १५. १.) इति श्रुतेः ॥

यद्वा हे शिवाख्ये । तव हि यतो वाच्यार्थः शक्यार्थः पुरभिन्मुर-भिद्वास्तु । मङ्गलार्थद्वारा तत्र सम्बध्यत इत्यर्थः । उद्भिदादिशब्दवदत्र रूढियोगावभ्युपगन्तव्यौ । तथैवोत्तरत्र वक्ष्यमाणत्वात् । स मुरभित् लोकानामीष्टामवच्छिन्नस्यैवेश्वरत्वात् । एवं च शिवस्य मुख्यत्वात् पुरत्रय-हिंसकत्वं मुरभिदो गौणत्वात् एकासुरहिंसकत्वमिति फलितोऽर्थः । तस्य मुरभिदः । स मुरभित् । अन्यत्प्राग्वत् ॥

यद्वा हे शिवाख्ये । तव हि यतः पुरभिद्वा मुरभिद्वा अवाच्योऽर्थः अमुख्यार्थः । शिवशब्दस्य ब्रह्मण्येव तात्पर्यगत्यवधारणात् । 'शिव एको ध्येयः शिवङ्करः' (अथ. शि. ३) इति श्रुतेः । तस्मात्स मुख्यार्थः लोकानामीष्टां श्रितजनं सुखेनावतु । ना नरोऽहं देहात्मैक्यवान् तस्या-मुख्यार्थस्योपासनायामलं भवामि । तर्ह्युपास्यतामित्याशङ्क्याह—अपीति । तथापि स च मे मा भूत् । तत्कुतः । यत्त्वां श्रितस्तस्मात् त्वदन्यदलं निषिद्धं भवतीत्यर्थः । ब्रह्मनिष्ठस्य व्यक्त्युपासनायां प्रत्यवायश्रवणादिति भावः ॥

यद्वा हे शिवाख्ये । तव वाच्यार्थः पुरभित्, अथवा लक्षणया मुरभिदस्तु । उभयोरपि हिंसकत्वात्सोऽपि वाच्यार्थश्च मे मा भूत् । तर्ह्यहिंसकं किमाश्रयसे इत्याशङ्क्याह—अहमिति । अहं देहात्मैक्यवान् । त्वां जीवभावम् । लक्षणया तदर्थलाभः । 'तत्त्वमसी'ति महावाक्ये युष्मदर्थस्य जीवत्वाभिधानात् । अतो जीवभावं विहाय यद्वस्तु भवति प्रकाशते अस्ति वा तन्नामब्रह्म मेऽलम् । तच्छब्दस्य ब्रह्मोपलक्षकत्वात् । 'ओं तत्सदि'ति श्रुतेः । नामब्रह्मीभवनमेव निर्दुष्टमिति भावः ॥

अत्र पुरभिन्मुरभिच्छब्दयोः साभिप्रायत्वात्परिकराङ्कुरालङ्कारः । 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' । अनेन वाक्यार्थरूपवस्तुना अहंममेत्यध्यासविनिर्मुक्तानामेव नामब्रह्मण्यासक्तिरिति व्यज्यते ॥

वाच्यार्थं तद्देयं फलं च निषिद्ध्य ममैवोत्कर्षः कथमुपपद्यते इत्याशङ्क्याह—

**स्वयम्भूदैत्यारित्रिपुरमथनानीरितकृत-**
**स्त्रिलोकीसाम्राज्यं तदपि नयनादेशवशगम् ।**
**विधातुं त्वद्राजस्त्वमलमलघुस्ते हि महिमा**
**महेशाख्ये वाचामतिसरणिमाचामतितराम् ॥ ५ ॥**

**स्वयम्भ्विति** । हे महेशाख्ये तव महिमा माहात्म्यं; 'पृथ्वादिभ्य' इति इमनिच् । अलघुर्महीयान् । 'स्वे महिम्नि प्रतिष्ठितः' इति श्रुतेः । हि यतः महिमेत्यनुषज्यते (छा. ७. २४) । वाचा च मतिश्च तयोः सरणिं मार्गं आचामतितरां व्याप्नोतितराम् । 'चमु अदन' इति

लट्परस्मैपदम् । पूर्वनिपातशास्त्रस्यानित्यत्वज्ञापनात् । वाङ्मनसयोरगोचर इत्यर्थः । अथवा वाचा गिरा सह । 'विनापि तद्योगं तृतीया' इति तृतीया । मतिसरणिं बुद्धिमार्गमिति । अथवा वाचा कृष्णरामेति शब्देन मतिसरणिमाचामतितरां सन्ततभगवन्नामोच्चारणेन मनसो वृत्त्यन्तरं निरुणद्धि इति यावत् । अथवा अतिसरणिं सरणिम् अतिक्रान्तेत्यर्थः 'अतिरतिक्रमणे चे'ति द्वितीया । वाचां गिरां 'यथा वाचांनिशादिशे'ति शासनात् । 'चत्वारि वाक्परिमिता पदानी'ति श्रुत्युक्तचतुर्विधवाङ्मार्गातीतयाऽपि वाचा न गण्यत इति भावः । "यतो वाचो निवर्तन्त" (तै० २. ४. ५.) इति श्रुतेः । तदेवोपपादयति स्वयम्भ्वित्यादिना । महेशाख्य इत्यनुषज्यते त्वं भवतो त्वद्भाजः त्वां भजति कीर्तयतीति (कर्तरि क्विप्) तस्य । स्वयम्भूः ब्रह्मा दैत्यारिः चक्रपाणिः त्रिपुरं मथ्नातीति ल्युट् । मेरुधन्वा तान् । ईरितकृतः आज्ञाकारिणः । नाम्ना एव एषोऽर्थः सङ्गच्छते । तत्प्रसिद्धम् । त्रयाणां लोकानां समाहारः त्रिलोकी । 'द्विगोरि'ति ङीप्' । सम्राजो भावः साम्राज्यं 'गुणवचने'त्यादिना ष्यञ् । अपिः समुच्चये । नयनादेशः अपाङ्गः आज्ञा वा तद्वशं तदधीनतां गच्छतीति तथा विधातुं कर्तुम् अलं समर्था । अथवा त्वद्भाजः कर्तारः ब्रह्मविष्णुरुद्राणाम् अनीरितकृतः अनाज्ञाकारिणः अविधेयाः सन्तः इति यावत् । एकपदम् । तत्त्रिलोकीसाम्राज्यमपि नयनादेशवशगं कर्तुं वर्तन्त इति शेषः । त्वम् अलं माऽस्तु । त्वद्भक्तानां स्वर्गादिप्रदाने तव यत्नो मास्त्वित्यर्थः । सर्वैश्वर्यमपि शिवाख्याकटाक्षवीक्षिताधीनमिति

भावः। त्वद्भक्तानामप्येतावन्माहात्म्यशालित्वे सिद्धे त्वन्माहात्म्यस्य वाङ्मनसयोरगोचरत्वं कैमुतिकन्यायसिद्धमेवेति भावः। यद्वा भूदैत्यारित्रिपुरमथनाः। भूमौ जातो दैत्यो नरकासुरः शाकपार्थिवत्वात्समासः 'द्वन्द्वेघो'ति भूदैत्यारिशब्दस्य पूर्वनिपातः। त्रयाणां पुराणां समाहारस्त्रिपुरं पात्रादित्वान्नपुंसकत्वम्। बहुत्वं चाऽवताराभिप्रायेण। उत्तरत्र शिवशब्दवाच्यत्वस्य रघुपतेरपि वक्ष्यमाणत्वात्। **अष्टोत्तरे** च तथा पठितत्वात्। स्वयं तत्त्रिलोकीसाम्राज्यमपि नयनादेशवशगं विधातुम् अलं नालमिति काकुः। अत्रापिगर्हायाम्। एतादृशाः कथं स्वसारूप्यादिप्रदानप्रवीणा भवेयुरिति भावः। अन्यत्प्राग्वत्। तर्हि कथम्भूतास्सन्त एवं कर्तुं समर्था इत्यत आह—त्वद्भाज इति। वाच्यवाचकत्वेन त्वामाश्रिताः सन्त इति भावः। अन्यत्प्राग्वत्। यद्वा अनीरितकृतः स्वतन्त्रस्य त्वद्भाजः स्वयंभूः उःशम्भुः दैत्यारिः एतद्रूपं च तत्। त्रिपुरं चेति। पुरं देहः। अथ मङ्गलम्। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। नयनादेशवशगं तत् त्रिलोकीमपि मङ्गलं विधातुं नालं न समर्था। त्वद्रसविद्भ्यो मङ्गलेतररूपं त्रिगुणात्मकब्रह्मादिभावं त्रैलोक्याधिपत्यमपि दत्वा तान्वञ्चयितुं त्वं न समर्थेति भावः। अत्र शिवाख्यामहिमातिशयस्य वाचामगोचरत्वादिरूपहेतुना साधितत्वात् हेत्वलङ्कारः। "हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते"। अनेन वाक्यार्थरूपवस्तुना नामभक्तानां प्रापञ्चिकाध्यासविनिर्मुक्तत्वं व्यज्यते॥

पूर्वश्लोकेन सामान्यतो निरूपितं नाममहिमानम् अत्र सदृष्टान्तं निरूपयति—

**करालाद्यत्क्ष्वेलाज्जगदवितवानिन्दुमकुटः**
**कृतान्ताद्दुर्दान्ताद्यदपि मुनिचूडामणिसुतम् ।**
**अनल्पैः किं जल्पैस्तदिदमवनीयस्य रसना-**
**कृतत्वत्सेवायाश्चरितमभिधे मन्मथरिपोः ॥ ६ ॥**

करालादिति । हे मन्मथरिपोरभिधे निरोहस्याख्ये । अभेदे षष्ठी । अवनीयस्य नामकीर्तनपरस्य रसनाकृतत्वत्सेवायाः जिह्वाकृतनामकीर्तनस्य चरितं तत्काले शिवाऽस्मात्रक्ष रक्षेति कोर्तितत्वादिति भावः । अनल्पैः बहुभिः जल्पैः उदाहरणवाक्यैः किं, किं प्रयोजनम्? त्वत्कीर्तनस्यैव गरलकालनियन्तृत्वरूपमाहात्म्यमिति भावः । अत्र गरलकालनियमनकर्तृभूतपरमेश्वरचरितमपह्नुत्याऽऽख्याकीर्तनचरितत्वेन वर्णितत्वादपह्नुत्यलङ्कारः । "यद्यपह्नुतिगर्भत्वं सैव साऽपह्नवा मता" । यद्वा गरलादिनियमनम् अवनीयस्य कृत त्वत्सेवा या रसना तया चरितम् अनुष्ठितमिति यावत् । आः कष्टं सर्वेषां गरलकालनियमनेऽशक्ततां स्मृत्वा एवं प्रयुक्तम् । एवमेव लोकोक्तिरपि कथमेतत्कार्यं साधितवान् कष्टमिति सर्वम् अनवद्यम् । अन्यत्स्पष्टम् ॥

एतादृशमहिमवन्तो बहवः सन्तीत्याशङ्कायामाह—

**शतं सन्त्वाम्नायाः शतमपि पुराणागमगणाः**
**विहाय त्वामेते वितरितुमलं किं शिवधियम् ।**

**अशेषग्लानिं या हरति भवती तु श्रममृते**
**शिवाख्ये मातस्तामितरनिरपेक्षा वितरति ॥ ७ ॥**

शतमिति । शतम् आम्नायाः वेदाः शतमपि पुराणागमगणाः । विंशत्याद्याः सदैकत्व इति शब्दस्यैकत्वम् सन्तु वर्तन्ताम् । अस भुवि इत्यामन्त्रणे लोट् । कथमनादर इत्याशङ्कायामाह—येति । या शिवधीः मङ्गलज्ञानम् अशेषग्लानिं समस्तदुःखं हरति निवारयति तां शिवधियं ते वेदादयः त्वां विहाय मे मम वितरितुम् अलं किं समर्थाः किम् असमर्था इति यावत् । वेदानधीत्य तदर्थान्विचार्य तदुक्तानुष्ठानमपि कृत्वा त्वद्भजन एव पर्यवसानादिति भावः । तथा च **स्कान्दे**—“ चतुर्णामपि वेदानां यो यजुर्वेद उत्तमः । काण्डानामपि सप्तानां चतुर्थः काण्ड उत्तमः ॥ प्रश्नानामपि सप्तानां पञ्चमः प्रश्न उत्तमः । एकादशानुवाकानामष्टमस्त्विष्टदायकः ॥ एकविंशतिमन्त्राणां द्वौ मन्त्रौ मन्त्रनायकौ । तन्मध्ये जीवरत्नं स्याच्छिव इत्यक्षरद्वयम् ॥ इति । **भगवद्गीतायां** च “ चतुर्विधा भजन्ते मा”मित्युपक्रम्य “ ज्ञानी च भरतर्षभ ”, इति (७. १६) । तर्हि किं तावत् सुखेन दुःखं हरतीत्याशङ्क्याह—भवतीति । हे शिवाख्ये मातः भवती श्रममृते कायक्लेशदुःखमन्तरेण । ऋते चेति चान्द्रव्याकरणादत्र द्वितीया । निर्गता अपेक्षाया निरपेक्ष इतरेषां निरपेक्षा अर्थावबोधकर्मादिनिरपेक्षाऽस्तीत्यर्थः । तां शिवधियं वितरतीत्यनुषज्यते । विपूर्वकतॄप्लवनतरणयोरिति लट् । माता तावत् किमपेक्षितं किमपेक्षितमिति शिशुमापृच्छ्य तस्मै स्वयमेवाभिमतं ददाति । जनका-

दयस्तु स्वाङ्काश्रयिणमपि शिशुमयं रोदिति त्वयैव समाधेयमिति मातृनिकटमेव तं नयन्ति तद्वदत्रापीति भावः। हे शिवाख्ये भवती तु श्रमभृते इतरनिरपेक्षाऽस्ति अशेषग्लानिं हरति मम शिवधियं च वितरति। 'एकान्तनिष्कृतिः शम्भोः सकृदेव हि कीर्तन' मिति वचनात्। तां त्वत् कारणरूपिणीं विहाय एते वेदादयः एवं कर्तुमलं किम्, न समर्था इत्यर्थः। अत्र वेदादीनां परम्परया ज्ञानसाधनत्वम् नाम्नस्तु अक्लेशं यथा तथा साक्षात्साधनत्वमिति विशेषदर्शनाद्व्यतिरेकालङ्कारः। 'व्यतिरेको विशेषश्चेदुपमानोपमेययो' रिति ॥

पूर्वोक्तमेव सदृष्टान्तं विवृणोति—

**त्रिणेत्रस्य ग्लानिस्त्रिपुरदनुजादीन्मुररिपो-**
**र्दशग्रीवप्रष्ठानपि दळयितुं हन्त कियती।**
**नियन्त्री या तेषां निखिलजगतोऽप्याशु दलय-**
**स्यविद्यां निर्यत्नं निटिलनयनाख्ये जननि ताम् ॥८॥**

त्रिणेत्रस्येति। त्रिणेत्रस्य कामदाहकस्य पुरासुरादीन् मुररिपोश्चक्रपाणेः दशग्रीवप्रष्ठान् रावणप्रभृतिराक्षसान्। अपिर्गर्हायाम्। अतितुच्छग्लानित्यर्थः। हन्तुं कियती ग्लानिः कियान् श्रमः। विष्ण्वादिसाधनसम्पत्त्या शाखामृगादिसाधनसम्पत्त्या चेत्यर्थः। या तेषां प्रपञ्चस्य च नियन्त्री प्रेरिका विधायिनी वा तामविद्यां पुरभिदभिधे त्वं निर्यत्नं पूर्वोक्तसाधननिरपेक्षं यथा तथा आशु शीघ्रं दलयसि निवारयसि। पार्वत्युपदिष्टाभिजिन्मुहूर्तप्रतीक्षणमिव अगस्त्योपदिष्टादित्यहृदयप्रतीक्षण-

मिव च किमपि साधनप्रतीक्षणं विना निवारयसीत्यर्थः। अत्र शिवादिव्यक्तीनामपि अविद्यापरिणामनिवारकत्वसामर्थ्येऽपि परिणाम (अविद्या) निवारकत्वरूपविशेषस्य आख्याया दर्शितत्वात् व्यतिरेकालङ्कारः। अनेन अलङ्कारेण सर्वापेक्षया हरिहरयोरुत्कर्षः, तदपेक्षया च आख्याया उत्कर्ष इति सारालङ्कारो व्यज्यते ॥

नामकीर्तनस्यैव अविद्यानिवारकत्वं निश्चित्य तदेव प्रार्थयते शिवाख्यां प्रति—

**भवत्याः पन्थानः शतमखमुखश्रीभिरभितः**
**सुधासारैः सिक्ताः कुसुमसमवायैश्च निचिताः।**
**क्रियन्ते निर्याहि स्मरभिदभिधे दीयत इतः**
**करालम्बो जाग्रद्विनयभरया मुक्तिरमया ॥ ९ ॥**

भवत्या इति। हे स्मरभिदभिधे कामनिवारकाख्ये; अथवा स्मरणं स्मरः तं भिनत्ति प्रकाशयति तथा "यद्धि मनसा ध्यायति तद्वाचा वदति" इति श्रुतेः। अथवा अहममेतिस्मृतिनिवारकाख्ये इत्यर्थः। भवत्याः पन्थानः उच्चारणानि शतमखस्य इन्द्रस्य मुखस्य वदनस्य श्रीभिः वाग्विलासैः कालकूटपीडाकालिकशिवनामरूपैरित्यर्थः। अनेन भयनिवारकत्वम् आख्याया एवेति व्यज्यते। सुधासारैः अमृतधारासम्पातैः करणैः सिक्ता आर्द्रीकृता इन्द्रस्य सुधापायित्वात्तन्मुखोच्चारणद्वारा इन्द्रसम्बन्धिन इति यावत्। कुसुमसमवायैर्नाभीहृदयमुखकमलसम्बद्धैर्निचिताः संसक्ता आस्तीर्णा इत्यर्थः। क्रियन्ते विरच्यन्ते डुकृञ् करण इति

कर्मणि लट्। नाभीकमलादीनां शब्दोत्पत्तिस्थानत्वादित्यर्थः। इतः पार्श्वे जाग्रत् उत्तिष्ठन् विनयः प्रह्वता तस्य भरः समृद्धिः यस्य, अनुन्मिषदहङ्कारस्येत्यर्थः। तया प्रसिद्धया मुक्तिरमया मोक्षलक्ष्म्या करालम्बः हस्तावलम्बः दीयते। डुदाञ्दान इति कर्मणि लट्। मुक्तिरपि त्वदाश्रयैवेति भावः। अतो निर्याहि बहिः सञ्चर। अत्र प्रस्तुतनामोच्चारणवृत्तान्तेन अप्रस्तुतराजस्त्रीक्रीडाविहारप्रतीतेः समासोक्तिरलङ्कारः। अनेन वाक्यार्थरूपवस्तुना नामोच्चारणमात्रेण मुक्तिर्भवतीत्येवं रूपेण कवेर्नामकीर्तने महानुत्साहो व्यज्यते॥

लोके तावदधिकैश्वर्यसम्पन्नोऽपि किञ्चिदपि दातुं न सम्मन्यते यथाकथञ्चिद्यत्किञ्चिद्दत्तमपि बहिर्बहु वदति पुनरपि तत्स्मारंस्मारं खिद्यति च तद्वृत्तमपि चेत्तत्राह—

**शिवाख्ये जिह्वायां वहति भवतीं यस्तमखिलं**
**शरद्राकाचन्द्रद्युतिमसितकण्ठं त्रिणयनम्।**
**विधून्मीलन्मौलिं विरचयसि केयं व्यसनिता**
**विहन्तुं ते जीवेष्वहह शिवभावासुलभताम्॥१०॥**

शिवाख्य इति। हे शिवाख्ये ते तव जीवेषु विषये शिवभावासुलभतां शिवसारूप्यदौर्लभ्यं विहन्तुं निवारयितुं केयं व्यसनिता उद्युक्ततेत्यर्थः। व्यसनस्याऽऽन्तरत्वात् आख्यायो अविकत्थनत्वं व्यज्यते। अहह आश्चर्यम्। वहतीति लटो वर्तमानार्थकत्वेन पूर्वजन्मन्यकृतनामकीर्तनस्यापि जिह्वायामिति पदेनाऽवशनामकीर्तनस्याऽपि शिवसारूप्यं

व्यज्यते। भक्त्यधिकदानेऽपि शिवाख्याया अतिजागरूकतेति भावः। अत्र अल्पभक्तेरपि शिवसारूप्यदानेन आख्याया भक्तरक्षणजागरूकतासामान्यस्य समर्थनादर्थान्तरन्यासः। "उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयो"रिति। स्पष्टमन्यत्॥

सकृदवशात् शिवाख्यां कीर्तयतः शिवसारूप्यलाभात् निरन्तरं शिवाख्यां कीर्तयतः किं फलमित्याशङ्कायामाह—

**समाचक्षाणस्य स्मरभिदभिधे देवि भवती-**
**महो यस्यां यस्यां हरिति नयनान्तोऽवतरति।**
**हरास्तस्यां तस्यामलिकनयनाश्चन्द्रमकुटाः**
**शरज्ज्योत्स्नागौराः सह गिरिजयोद्यन्ति [शतशः॥ ११॥**

समाचक्षाणस्येति। सततशिवनामकीर्तनस्य दृष्टिगोचराः सर्वेऽपि शिवसारूप्यं लभन्त इति भावः। अत्र एकस्य शिववस्तुनः अनेकत्र वर्णितत्वात् विशेषः। "विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्णितम्"। शिवापेक्षया सन्ततशिवनामकीर्तकस्यातिशयो व्यज्यते॥

तमेव प्रपञ्चयति—

**शिवः कामं क्रोधाकुलमतिरजैषीत्त्वदनुगै-**
**र्जितः कामः क्रोधोऽप्यथ मुनिकुमारं यमभयात्।**

**शिवोऽरक्षीदेकं सयतनमिमे तद्भयहृतोऽ-**
**खिलस्येक्षामात्राज्जितमिह शिवाख्ये त्वदनुगैः ॥१२॥**

शिव इति। शिवः क्रोधाकुलमतिः क्रोधान्धहृदयः सन् कामं मन्मथदेहम् अजैषीत् भस्मीकृतवान्। जि जय इति लुङ्। न तु तच्छक्तिमित्यर्थः। पुनः पार्वतोपरिणयं कृतवानिति पुराणात्। त्वदनुगैः नामकीर्तकैः कामो विषयेच्छा क्रोधो हिंसाद्यनुकूलव्यापारग्रहः सोऽपि अथ जितः कार्त्स्न्येन जितः। नामकीर्तकानां सशक्तिककामक्रोधनिः-शेषीकारकत्वेन आधिक्येऽपि तदसाध्यमन्यत् शिव एव कृतवानित्याह— मुनिकुमारमिति। शिवः यमभयात् मृत्युभोतेः मुनिकुमारं मृकण्डु-तनयं मरणवेलायामपि शिवनामकीर्तनेन निर्धूतपापमित्यर्थः। सयतनं सशूलाद्युद्यमं यथा तथा अरक्षीत् अपालयत्। रक्ष पालन इति लुङ्। अनेन कर्मणापि तेषामेवाधिक्यं व्यङ्क्तुमुपक्रमते—इमे इति। इमे नामपराः ईक्षामात्रात्कटाक्षवीक्षणादेवाखिलस्य तद्भयहृतः मृत्युभयनि-वर्तकाः। क्विप्। तथा च **भागवते**—'नह्यम्मयानो' त्यादि 'यत्र विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः।' इति च। अतः त्रिलोक्यां त्वदनुगैः जितं जयवत्त्वेन स्थितम् न त्वन्येनेत्यर्थः। शिवः कामदेहं तत्पुत्रसाहाय्येन जितवान्, भक्तकीर्त्यमानशिवनामैव 'स्वयमप्ययं शिवभक्तः न 'केनापि द्रष्टुं शक्य' इत्यनुवादमुखेनोच्चार्य श्रोत्रियपुत्रं तपस्वि-नमेकं रक्षितवत् इति पुराणगाथया शिवस्य किञ्चिच्छक्तिमत्त्वं सम्यङ्‌ नामकीर्तकानां तु सकुटुम्बसशक्तिककामजेतृत्वत् दर्शनमात्रेण सर्वेषां

यमभयवारकत्वाच्च शिवापेक्षया नामकीर्तक उत्कृष्ट इत्यर्थः। (अजा माया), अस्या एषणं एषः प्राप्तिरस्यास्तीति इनिः (एषी)। (अजैषी) मायावच्छिन्न इत्यर्थः। क्रोधाकुलमतिः अविद्यासङ्गिनस्तत्सम्भवात्। शिवः कामः क्रोधोऽपि त्वदनुगैः कामं नितान्तम् अथ जितः आरम्भ एव पराजितः। जित इति प्रत्येकमनुषज्यते। स्थालीपुलाकन्यायेन तेषां तादृशजयवत्त्वमेवोपपादयति—शिव इति। शिवो यमभयात् आधिकारिकमृत्युभीतेः एकं मुनिकुमारम् अरक्षीत्। इमे अखिलस्य सुकृतिदुष्कृतिजनस्य ईक्षामात्राद्दर्शनादेव अथवा ज्ञानादेव तद्भयहृतः यमभयहारिण द्वन्द्वभयनिवर्तकाः। तत् ब्रह्म, तद्भिन्नो जीवः जीवत्वमोचका इति यावत्। अतः इह त्रिलोक्यां त्वदनुगैरेव जितम्। शिवापेक्षया त्वद्भक्तस्य अधिककार्यकारित्वात्सर्वोत्कृष्टत्वमिति भावः। अत्र शिवापेक्षया नामकीर्तकस्योत्कर्षसमर्थनात्काव्यलिङ्गमलङ्कारः। "समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्"। अनेन वाक्यार्थेन निरन्तरनामकीर्तकानां निग्रहानुग्रहशक्तिमत्त्वं व्यज्यते॥

शिवाख्योत्कर्षार्थं सकृदसकृदाख्याकीर्तकप्रशंसया आक्षिप्तयोरानुषङ्गिकप्रासङ्गिकनामकीर्तकयोर्मध्ये आनुषङ्गिकनामकीर्तकस्य प्राथमिकत्वात्तन्निरूपणद्वारा पूर्वश्लोकार्थमेव साधयति—

**चरन्तीं त्वच्छायां शशिवदुपवारशि वसती-**
**ष्वथोमुख्यासूक्तिष्वपि रसनया सङ्कलयतः।**

**परागं ब्रह्माद्याः पदकलितमञ्चन्ति शिरसा**
**शिवाख्ये त्वन्निष्ठैर्जितमिति किमम्बाद्भुतमिदम् ॥१३॥**

चरन्तीमिति । शिवाख्ये तादर्थ्येन त्वत्कीर्तनं कुर्वद्भिः सर्वं जितमिति किमाश्चर्यम् । तत्कुतः ? शशिवदुपवाराशिवसतीत्यदोमुख्यासु विप्रकृष्टस्त्रीपुत्रविषयिणीषु उक्तिषु तात्पर्येण प्रयुज्यमानेषु वचनेषु चरन्तीं प्रकाशमानां वर्तमानां वा त्वच्छायां तव प्रतिबिम्बं; सेनासुराच्छायेति वैकल्पिकं नपुंसकत्वम् । "छायाप्रतिकृता" वित्यमरः । शिकारवकारमेलनमात्रेण छायात्वमस्य । रसनया जिह्वया सङ्कलयतः कीर्तयतः जनस्य पदकलितं चरणगतं परागं रेणुं ब्रह्माद्या देवाः शिरसा अञ्चन्ति पूजयन्ति वहन्ति वा, अञ्चुगतिपूजनयोरिति लट् । आनुषङ्गिकशिवनामकीर्तकोऽपि ब्रह्माद्युत्कृष्ट इति भावः । तथा च **पुराणं**—"वने चरामो वसु चाहरामो नदीस्तरामो न भयं स्मरामः । इतीरयन्तोऽपि वने किराताः मुक्तिं गता रामपदानुषङ्गात् ॥" इति । अत्र परागस्य दूरतो निरस्यत्वेऽपि नामकीर्तकपदसंसर्गेण ब्रह्मादिशिरोधार्यत्वकथनाद्गुणवदलङ्कारः । "गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम्" इति । अनेन अलङ्कारेण आनुषङ्गिकशिवनामकीर्तकस्यापि ब्रह्मादिपूज्यत्वरूपफलोत्पत्तेर्विभावनालङ्कारो व्यज्यते । "हेतूनामसमग्रत्वे कार्योत्पत्तिस्तु सा मता" इति ॥

प्रासङ्गिकनामकीर्तकप्रभावमुपपादयति—

**भवत्यां स्पृष्टायां बत पुरहराख्ये रसनया**
**करालेन ग्रीवा भवति गरलेनास्य कलिता ।**

**हुताशेनाश्लिष्टो भवति च करोऽङ्गानि भुजगैः**
**भवन्ति कान्तानि श्रितकुशलदा त्वं तु विदिता ॥१४॥**

भवत्यामिति । हे पुरहराख्ये भवत्यां रसनया जिह्वया स्पृष्टायाम् अर्थात् उक्तायाम् । ग्रामं गच्छन् तृणं स्पृशतीति न्यायादित्यर्थः । अस्य आर्थिकनामकीर्तकस्य यतः त्वं श्रितकुशलदा कीर्तकक्षेमकारिणी विदिता ज्ञाता । स्पष्टमन्यत् । अत्र हेतुविरोधव्याजस्तुत्यर्थान्तरन्यासानां सङ्करः । आख्यायाः कुशलदत्त्वरूपहेतुना भक्तस्य गरलादिलाभाद्विरोधः । गरलादिवितरणरूपनिन्दयाऽऽख्यायाः स्तुत्यभिव्यक्तेः निन्दास्तुतिः । भक्तस्य शिवसारूप्यवितरणरूपविशेषेण आख्यायाः कुशलदात्वसामान्यस्योक्तत्वादर्थान्तरन्यासः । "व्यक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयो" रिति । "आभासत्वे विरोधस्य विरोधाभास इष्यते" इति । अनेन वाक्यार्थेन सत्सङ्गेन दुष्टानामपि सात्विकत्वप्रतीतेः समासोक्तिर्व्यज्यते ॥

मौढ्यालस्यादिभिः पूर्वोक्तचतुर्विधनामकीर्तनमकुर्वाणस्य चरमवेलायां पूर्वपुण्यविशेषेण यादृच्छिकशिवनामश्रवणकीर्तने कुर्वाणस्य का गतिरित्याकांक्षायामाह—

**दशायामन्त्यायां दलितबलदीनेन्द्रियततौ**
**महेशाख्ये जिह्वां श्रवणमपि वा संश्रितवती ।**
**भवत्येकैवास्य प्रतिभवति भद्राय महते**
**तदा केनान्येनोन्मिषतु कणिका वाप्युपकृतेः ॥ १५ ॥**

दशायामिति । दलितं कुण्ठितं बलं शक्तिः यस्या अत एव दीना दर्शनाद्यक्षमा इन्द्रियाणि नेत्रादीनि तेषां ततिः समूहः यस्यामन्त्यायां चरमायां दशायां नामकीर्तनानन्तरं वृत्त्यन्तरोत्पत्त्यक्षमावस्थायामित्यर्थः । हे महेशाख्ये त्वम् एका केवला जिह्वां संश्रितवती प्राप्ता सती तदा निश्शक्तिकस्य त्वत्कीर्तनं घटेत वा न वेति संशय्याह—श्रवणमिति । पक्षान्तरे श्रवणं श्रोत्रं संश्रितवती सती अस्य मृत्युभीतस्य महते भद्राय मोक्षाय । विशेषणलब्धोऽयमर्थः । प्रतिभवति लग्नका भवति । तदा चरमवेलायाम् । (अन्येन केन) अनेककर्मणां मध्ये एकेनापि कर्मणा हेताविति तृतीया । उपकृतेः साहाय्यस्य कणिका लेशोऽपि वा उन्मिषतु त्वामहं पालयामि इत्युत्तिष्ठतु नोत्तिष्ठेदित्यर्थः । मिषधातोर्लोट् । चरमवेलायामेव सद्यो नामकीर्तनश्रवणे मोक्षसाधनमिति भावः । "न कर्मणा न प्रजये"ति श्रुतेः (महाना–८. १४) । तथा च **भागवते**—" नास्ति पातकमहो कलिकाले नामकीर्तनपरेषु नरेषु " इति । 'नाम्नोऽस्ति यावती शक्तिरि'त्यादि । अत्र अल्पाभ्यां नामकीर्तनश्रवणाभ्यां महाफललाभात् विभावनालङ्कारः । अनेन वाक्यार्थेन शिवाख्याश्रयाणामेव अक्लेशेन झटिति भवतरणसम्भवो व्यज्यते ॥

चरमवेलायां नामकीर्तनश्रवणमहाफलप्रदातृत्वोक्त्या ब्रह्मनिष्ठानामिवैतेषां जीवन्मुक्तिर्नास्ति वेत्याशङ्क्याह—

**मनागप्यस्पृष्टा गहनदहनेनेह विषयाऽ-**
**भिधानेनानेन क्षितिधरसुतानेतुरभिधे ।**

**रमन्ते कामं ते कतिचिदतिकल्लोलितसुधा-**
**झरायां धारायां शिशिरशिशिरायां सुकृतिनः ॥१६॥**

मनागिति । अयि क्षितिधरसुतानेतुरभिधे पार्वतीपतेराख्ये क्षितिधरसुता गङ्गा अथवा क्षितिधरसुता सीता तस्या नेतुः श्रीरामचन्द्रस्य अभिधे । सञ्जातः कल्लोलः अस्य कल्लोलितः । तारकादित्वादितच् । शिशिरशिशिरायाम् अत्यन्तशीतलायाम् । अतिशये द्वित्वम् । तव धारायाम् नामकीर्तनपरम्परायां कतिचित् केचित् सुकृतिनः पुण्यपुरुषाः स्रक्चन्दनवनिताद्याख्येन गहनदहनेन अरण्यानलेन । 'गहनं काननं वनम्' इत्यमरः । अनेन अनुभूयमानेन मनाक् ईषदपि अस्पृष्टा अनालोढाः सन्तः कामं भृशं रमन्ते क्रीडन्ति । रमु क्रीडायामिति लट् । "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा" (भ. गी. ४. १४.) इति स्मरणात् । विषयाणां हृदयतापकारित्वेनाग्नित्वारोपः नामकीर्तनधाराया आध्यात्मिकादितापहारित्वेन झरत्वारोपः । अयं भावः—निरन्तरशिवाख्याकीर्तनपराः सर्वेऽपि विषयैरनाकृष्टा इति । 'असङ्गोह्ययमरः शुभ्र' इति 'निरञ्जनः साम्यमुपैति विद्वान्' इति श्रुतेः । व्यस्तरूपकालङ्कारः । "विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्" । अनेनालङ्कारेण नामकीर्तकानां विषयबाधाभावे प्रस्तुते अप्रस्तुतं जलक्रीडाविधायिनां तापाभावसम्भवप्रतीतेः समासोक्तिर्व्यज्यते ॥

सन्ततनामकीर्तकस्वभावः कीदृशः इत्याकांक्षायामाह—

**वधूटीपुत्रादीन् वसुविसरमानम्रनृपति-**
**च्छटाचूडारत्नच्छविकवचिताशां श्रियमपि ।**
**जहत्येके धन्या जगति मदनद्रोग्धुरभिधे**
**विहारे सोत्कण्ठा विहृतिरहिते त्वल्लहरिषु ॥१७॥**

वधूटीति । हे मदनद्रोग्धुरभिधे कामजेत्राख्ये त्वल्लहरिषु नामकीर्तनप्रवाहेषु विहतिरहिते प्रत्यूहवर्जिते विहारे कीर्तनक्रीडायां सोत्कण्ठा उत्सुका एके केचित् मुख्या वा जगति वधूटी चिरण्टी "वधूटीचिरण्टीशब्दौ यौवनवाचिना" वित्यभिधानात् प्रजोत्पादनशक्तिमतीति यावत् । पुत्रः पुन्नामनरकतारकः 'प्रजया हि मनुष्यः पूर्ण' इति श्रुतेः । तौ आदी येषां तान् वसुविसरं धनसमृद्धिम् आनम्राश्च ते नृपतयश्च तेषां च्छटा श्रेणी तस्याश्चूडारत्नं तस्य छवयः कान्तयः ताभिः कवचिता व्याप्ता आशा यस्याः । श्रियं सार्वभौमलक्ष्मीमपि "तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादि"ति श्रुतेः (तै. उ. ii. ८) । जहती त्यजन्ती । ओहाक् त्याग इति लट्, श्नाभ्यस्तयोरित्यल्लोपः, अदभ्यस्तादित्यत्त्वं च । निरन्तरनामकीर्तनरसविदः दग्धपटन्यायानुसारि-मतयोऽपि न भवन्तीति भावः । अत्र स्वभावोक्तिः 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णन''मिति ॥

पूर्वोक्तनामकीर्तनस्य रोगाद्यनभिभूतसाध्यत्वात् तन्निवारणाय शिवाख्यामेव प्रार्थयते—

**शिवाख्ये त्वत्स्रोतस्ततिषु विहृतिं बाधिषत मा**
**ममाशक्त्यालस्यारतिगदनिहृत्याद्यभिभवाः ।**
**प्रकामं बाधन्तामितरदखिलं तेऽभित इमे**
**प्रणामास्ते सन्तु प्रविरचय मत्कांक्षितमिदम् ॥ १८ ॥**

शिवाख्य इति । हे शिवाख्ये त्वत्स्रोतस्ततिषु नामप्रवाहेषु विहृतिं लीलाम् आलस्यं जाड्यम् । अरतिर्मौढ्यादिना प्रीत्यभावः गदो व्याधिः । 'रोगव्याधिगदामयाः' इत्यमरः । निहृतिः दुःसहाधिजनित-मनःप्रवृत्तिकुण्ठनम् । आदिशब्देन भूतावेशादयो गृह्यन्ते । एतद्रूपा-श्च ते अभिभवाश्च प्रत्यूहाश्च मा बाधिषत न पीडयन्त्वित्यर्थः । बाधधातोर्लुङ् न माङ्योग इ[illegible]भावः । इतरत् शिवाख्याकीर्तनव्यतिरिक्तं कर्म प्रकामं नि[illegible]न्तु [illegible]ममतानामन्तरायाणामवश्यं विषयस्य कल्प्य[illegible] कर्तुमम किं करोषीत्यत आह—प्रणामा इ[illegible] का[illegible]णामिव विघ्नः सन्निधत्त इति व्यज्यते । स्पष्टमन्यत् । अत्र केवलप्र[illegible] भूरितरप्रतिबन्धकनिवृत्तिपूर्वकनिरन्तरशिवाख्या-रूपवस्तुग्रह[illegible]परिवृत्तिः । "परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथ" इति । अनेन वाक्यार्थेन कवेः काम्यकर्मतत्फलानासक्तिर्व्यज्यते ॥

मया निवारितेऽपि विघ्ने वासनाबलात् मनुष्या विषयेष्वेव प्रवर्तन्ते इत्याख्याया आशङ्कामुद्भाव्य स्थूणानिखनन्यायेन निरन्तरनाम-कीर्तकानां विषयप्रवृत्त्यभावं स्थिरयति—

**किमन्यन्मन्यन्ते जगति न तृणायापि कतिचित्**
**पदं मातः शातक्रतवमपि वैरिञ्चमपि वा ।**
**प्रधावन्ति त्यक्त्वा दहनमिव तत्प्रत्युत मनो-**
**भवारातेराख्ये त्वदमृतरसास्वादरसिकाः ॥ १९ ॥**

किमिति । हे मनोभवारातेराख्ये त्वदमृतरसास्वादरसिका नामामृतरुच्यभिज्ञाः सुधारूपविषयत्यागिन इत्यर्थः । एतेन नामपराः देवभावानभिलाषुका इति । व्यज्यते कतिचित् केचित् । मातः । निषेधतः शतक्रतोरिदं शातक्रतवं 'सम्बन्धेऽण्' । वैरिञ्चं ब्रह्मसम्बन्ध्यपि पदं स्थानं, "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । तृणायापि न मन्यन्ते न जानन्ति । मन अवबोधने इति लट्, मन्यकर्मण्यनादर इति चतुर्थी । एते स्वर्गादिकं कामं नेहन्तां तदान्तरालिकफलत्वेन तान् प्राप्नोत्वित्याशङ्क्याह—प्रत्युनेति । ब्रह्मादिपदं कर्म दहनमिव आश्रयाशमिव त्यक्त्वा विषयाभिलाषस्य स्वरूपाभिभावकत्वात् तदौपम्यम् । धावन्ति पलायन्ते । धावुगतिशुद्ध्योरिति लट् । अन्यत् भौमं पदं चक्रवर्तित्वं मन्यन्ते किं न मन्यन्त इत्यर्थः । निरन्तरनामकीर्तकानामान्तरालिकसत्यलोकादिपदप्राप्तिरपि न रोचत इति भावः । अत्र विषयस्य दहनसाम्यात् उपमा । "उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयो"रिति । किमन्यन्मन्यन्त इति भौमपदप्राप्तिप्रतिषेधात् आक्षेपालङ्कारश्च । तयोः संसृष्टिः "आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्" । अनेन वाक्यार्थेन शिवाख्याकीर्तिकरुचिर्न कुत्रापीति व्यज्यते ॥

नामरसविदां ब्रह्मादिपदपरित्यागे हेतुमाह—

**दिवं क्षोणीं क्षोणीं दिवमपि निरिन्द्रं जगदिदं**
**तथान्येन्द्रं वीतद्रुहिणमपि वान्यद्रुहिणकम् ।**
**प्रगल्भन्ते कर्तुं प्रसवविशिखद्रोग्धुरभिधे**
**प्रपन्नास्त्वां शान्त्यापि तु सहजयोदासत इमे ॥२०॥**

दिवमिति । प्रसवाः पुष्पाणि विशिखा बाणा यस्य तस्य द्रोग्धुः मदनसंहर्तुः अभिधे आख्ये त्वां प्रपन्नाः शरणितवन्तः जगत् कर्म यथेच्छं कर्तुं प्रगल्भन्ते समर्था भवन्ति । गल्भधातोर्लट् । तथापि सहजया स्वाभाविक्या शान्त्या अन्तरिन्द्रियनिग्रहेण । तुरवधारणे । इमे नामरसविदः उदासते उदासीना वर्तन्ते । ब्रह्माद्यपेक्षया उपरि वर्तन्त इति वा । आस उपवेशने इति लट् । एतेन स्वतपोयज्ञादिसमुत्पाद्यानि स्वर्गादीनि स्वोत्पादितानि अपत्यादीनि बन्धभिया परित्यजन्तीति भावः । अत्र ब्रह्मादीनां च जगन्निर्माणसाम्येऽपि भक्तानां शान्तिगुणविशेषवर्णनात् व्यतिरेकालङ्कारः । अनेनालङ्कारेण शिवाख्याभक्तानामेव शान्तिगुणविशिष्टत्वं व्यज्यते ॥

त्यक्तवैरिञ्च्यादिपदाभिलाषाः किमर्थं कलिमलसङ्कुलभूतले वसन्तीत्याशङ्क्याह—

**घनाः केऽपीशाख्ये त्वदमृतरसासारविसरैः**
**जगत् कल्युद्दामज्वलदनलशान्त्या शिशिरताम् ।**

**मयन्तस्तन्वन्तः समुचितफलस्याऽप्युपचितिं**
**क्षमाभूषा भान्ति क्षपितहरिदुद्वेलतिमिराः ॥२१॥**

घना इति । हे ईशाख्ये त्वदमृतरसासारविसरैः नामामृतनि-रन्तरवर्षैः कलिरेव उद्दामः प्रचुरः ज्वलन् स्फुरन्नग्निरनलः तस्य शान्त्या जगत् कर्म लोकम् शमनेन । अन्यत्र त्वदन्यः समुद्र इत्यर्थः । तस्यामृतं जलं तस्य आसारः धारा । "धारा सम्पात आसारः" इत्यमरः । तस्य विसरैः प्रसरणैः कलिः समरः " कलिसंस्फोटसंयुगा " इत्यमरः । आग्नेयाद्यु-ग्रास्त्रप्रयोगनिमित्ततया अग्नित्वारोपः । तस्य शान्त्या वर्षाकाले युद्धविश्रा-न्तिरिति श्रीमद्रामायणादिषु द्रष्टव्यम् । एकत्र लक्षणया जगत् तदन्तर्वर्ति-जनः तस्य शिशिरताम् आध्यात्मिकादितापत्रयशान्तिं नयन्तः प्रापयन्तः । नीङ् प्रापण इति धातोः शता दुहादित्वाद्द्विकर्मकत्वम् । जगत् भूमण्ड-लम् शिशिरतां नयन्तः । एकत्र समुचितफलं मोक्षः तस्य स्फूर्तिर्ज्ञान-विशेषः तस्योपचितिं वृद्धिः 'अहं ब्रह्मास्मीति' ज्ञानसान्तत्यम् इति यावत् । तां तन्वन्तः विस्तारयन्तः । तनु विस्तार इति धातोः शता । ....अन्यत्र ...........उद्वेलतिमिराणि अधिकध्वान्तानि येषु । एकत्र क्षमाया भूषा भूम्यलङ्कारा अथवा क्षमैव भूषा येषाम् शान्तिगुणसमृद्धा इत्यर्थः । अन्यत्र क्षमाया अभूषाः पङ्काद्युत्पादकत्वेन तादृशाः । व्योमालङ्कारा इति यावत् । अथवा समुत्पादितसस्यादिकत्वेन भूम्यलङ्काराः । केऽपि अनिर्व-चनीयमहिमानः विजातीया वा । अन्यत्र केचन घनाः एकत्र (एकान्त)-नामभक्ताः । भान्ति प्रकाशन्ते । भा दीप्ताविति लट् । विषयनिगरणात् घना

इति पदेन साधवो लक्ष्यन्ते । ते स्वोपकारनिरपेक्षाः सन्तः तान् स्वयमेव सुखयितुं प्रवर्तन्त इति भावः । तथा च **भागवते** (३. ५. ३)– "अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्ये"ति । अत्र श्लेषानुप्राणितरूपकातिशयोक्त्यलङ्कारः " रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः " । यथा घनाः मरुभूमिषु न फलोत्पादकाः न तथा नामभक्ताः पामरेष्विति केचित्पदेन व्यज्यते ॥

एवं सति के मां सङ्कीर्त्य महान्तो भवन्ति, के मामसङ्कीर्त्य पापिनो भवन्ति इति आख्याया आशङ्कामुद्भाव्याह—

**शिवाख्ये त्वद्वर्णद्वितयपरमाद्वैतरसिकाः**
**प्रियप्राप्तौ शर्माऽप्रियसमुपलम्भे शुचमपि ।**
**भयं वा कस्माचित् भयजनकतां कस्य च तथा**
**न विन्दन्ते ब्रह्माद्यसुलभपरानन्दभरिताः ॥ २२ ॥**

शिवाख्य इति । हे शिवाख्ये त्वद्वर्णौ तवाक्षरे तयोर्द्वितयं युग्मं (संख्याया अवयवे तयप् ) तदेव परमाद्वैतं तस्य रसिकाः तत्सम्बन्धिरसाभिज्ञाः । अत इनिठनाविति ठन् । " रसो वै सः । रसँह्येवायं लब्ध्वानन्दी भवति " (तै. २. ७) इति श्रुतेः । नामब्रह्मपरायणा इति यावत् । ब्रह्मादीनाम् असुलभः परानन्दः निरतिशयसुखं तेन भरिताः तृप्ताः सन्तः प्रियप्राप्तौ इष्टलाभे शर्म सुखम् अप्रियसमुपलम्भे अनिष्टप्राप्तौ शुचं शोकमपि न विन्दन्ते न प्राप्नुवन्ति । " प्रियाप्रिये न स्पृशत " (छां. ८. १२. १) इति श्रुतेः । ' विद्लृ लाभ ' इति

लट् । कस्माच्चित् भयम् 'भीत्रार्थानामि'ति पञ्चमी । कस्यचित् भय-जनकतां भयोत्पादकतां वा न विन्दन्ते । अन्यभावनाभावात् । "द्वितीयाद्वै भयं भवती"ति श्रुतेः (बृ १.४.२) "उदरमन्तरं कुरुते" (तै.२.७) इति श्रुतेश्च । शिवनामाद्वैतरसिकानां न कुत्रापि विषयसम्बन्धप्रयुक्त-प्रतिबन्धक इति भावः । दोष इति वा । अर्थान्तरं तु शिवाख्ये त्वद्वर्ण-द्वितयपरमाः तव वर्णद्वितयम् अन्यवर्णपदे (इव) तद्द्वितयमपीति धिया परमं मुख्यं येषाम् केवलवर्णद्वयबुद्धिकृत इत्यर्थः । द्वैतरसिकाः सन्तः प्रियप्राप्तौ शर्म अप्रियसमुपलम्भे शुचमपि कस्माच्चित् भयं कस्यचिद्भ-यजनकतां न विन्दन्त इति, (काकुः) विन्दन्त एवेत्यर्थः । किन्तु किं न विन्दन्त इत्याशङ्कायामाह ब्रह्मेति । ब्रह्म न विन्दन्ते । कथम्भूताः सन्त इत्याशङ्क्याह—अद्येति । अत्तुं योग्यम् अद्यं विषय इत्यर्थः । ऋहलोर्ण्यत् इति ण्यत् । तस्य सुलभा अधीनाश्च ते पराश्च इन्द्रियाणि येषाम् आनन्दः तेन भरिताः सन्तः तृप्ताः सन्तः इन्द्रियतर्पका इत्यर्थः । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योभिचाकशीति' (मुण्ड ३. १. १) इति श्रुतेः । 'स तु तत्पदमाप्नोति यस्माद्भूयो न जायते' (कठ. ३. ८) इति श्रुतेश्च । अत्र सभङ्गश्लेषालङ्कारः । अनेन शिवाख्यायाः केवलवर्णाकारत्वं न मन्तव्यमिति व्यज्यते ॥

शिवाख्याभक्ता अस्मान्नोपासत इति शिवादयः कदाचित्कुप्येयुः तदानीमेते किं कुर्युः इत्याशङ्कायामाह—

**जनो धत्ते यो मां जगति रसनायां श्रवसि वा**
**दिगीशा धाता वा दिशमपि तदीयां परुषया ।**
**दृशा जातु द्रष्टुं किमलमिति कामधुगभिधे**
**त्वदीयप्रस्थानध्वनिभरमिषाद्गर्जसि मुहुः ॥ २३ ॥**

जन इति । यो जनः जिह्वायां श्रवसि वा मां शिवाख्यां धत्ते कीर्तयति शृणोति च तदीयां दिशमपि दिगीशाः इन्द्रादयः धाता वा परुषया क्रूरया दृशा दृष्ट्या द्रष्टुम् अलं सन्तु किं समर्था भवेयुः किम् ? न समर्था इत्यर्थः । कामधुगभिधे त्वदीयं तव सम्बन्धि प्रस्थानं बहिर्गमनम् उच्चारणमिति यावत् । तस्मादुत्थितो ध्वनिः शब्दः तस्य भरः तस्य मिषात् व्याजात् त्वं गर्जसि सन्तर्जयसि । त्वद्ध्वनिश्रवणमात्रेण सर्वेऽपि नाम-भक्तविरोधिनः भीता भवन्तीति भावः । तथा च **पुराणम्**—"भर्जनं भवबीजानामार्जनं सर्वसम्पदाम् । तर्जनं यमदूतानां रामरामेति गर्जनम्" इति । अत्र शिवनामध्वनिमपह्नुत्य नामभक्तविरोधिपरि-हारकसन्तर्जनत्वोक्तेः कैतवापह्नुत्यलङ्कारः "कैतवापह्नुतिव्यक्तौ व्याजाद्यैः निह्नुतेः पदैः" । अनेन वाक्यार्थेन शिवनामविमुखाः सर्वकोपविषया इति व्यज्यते, अथवा शिवनामगर्जनेन सर्वेऽपि शान्तकोपा भवेयुरिति व्यज्यते ॥

शिवनाम्नः स्वभक्तविरोधिनिवर्तकत्वमात्रोक्त्या भक्तपराधीनत्वं नेत्याशङ्कायामाह—

**निबन्धारस्तेऽमी मम नियतमात्मीयरसना-**
**भुवीति त्वं त्रासादिव कुसुमचापभ्रुगभिधे ।**
**तृणं मेरुं मेरुं तृणमिति विलासव्यवहृती-**
**रपि द्रागेतेषां मयि सफलयन्ती विहरसे ॥२४॥**

निबन्धार इति । अमी ते भक्ता रसनाभुवि जलोत्पादकेन्द्रियाधिकरणे अथवा रुचिसर्वस्वाकर्षकस्थले मम नाम्नः निबन्धारः निरोद्धारः नियतं निश्चितम् । त्रासात् भयादिव । हे कुसुमचापभ्रुगभिधे सुकुमारवस्तुशस्त्रनिवारकाभिधे सम्बोधनमहिम्ना आख्यायाः त्राससम्भावना सङ्गच्छते । त्वं भवतो एतेषां भक्तानां तृणं मेरुं मेरुं तृणं च करोमीति विलासव्यवहृतोः अफलव्यवहारान् तेषां फलाभिलापासम्भवादेव न प्रयोगः (न फलयोगः) । द्राक् शीघ्रं सफलयन्ती अमोघीकुर्वाणा सती निजबन्धनभीतिप्रदर्शनार्थं द्रागिति विहरसे संचरसि (विपूर्वकहृञ् धातोर्लट्) । आख्या तावत् भक्तमनोऽनुसारिणीति भावः । अत्र स्वतःसिद्धे शिवाख्यायाः भक्तमनोरथसाधकत्वे त्रासरूपहेतोरुत्प्रेक्षितत्वात् हेतूत्प्रेक्षा "सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मने"ति ॥

यत्किंचित्पदकामानां हरिहरब्रह्मादय एवोपास्या इति प्राप्ते तत्राह—

**परित्यज्याशेषं जननि भवतीमेव भजतां**
**त्वमेवेशानाख्ये त्वदभिलषितं दैवतवरम् ।**
**दृशं तत्तन्मूर्त्यां श्रुतिमपि तदुक्त्या सफलतां**
**नयन्ती धत्से नन्ववधिविधुरां निर्वृतिधुराम् ॥**

परित्यज्येति । हे जननि शिवाख्ये अभिलषितं कांक्षितम् अशेषं समस्त यद्यद्दैवतवरं हरिहराद्यात्मकं परित्यज्य उत्सृज्य भवतीमेव भजतां कीर्तयतां त्वं भवती दृशं तत्तन्मूर्त्या हरिहराद्याकारेण श्रुतिं श्रवणमपि तत्तदुक्त्या वरं वृणीष्व भद्रं ते इत्यादिवचनेन सफलताममोघतां नयन्ती प्रापयन्ती सती अवधिविधुरां निरवधिकां मानुषानन्दापेक्षया अधिकामित्यर्थः । "एतस्य........मात्रामुपजीवन्ती"ति (बृ. ४. ३. ३२) श्रुतेः । निर्वृतिधुरां सुखसमृद्धिम् ऋक्पूरित्यप्प्रत्ययः । धत्से पोषयसि ननु (डुधाञ् धातोर्लट्) । आख्यामेव ब्रह्मादिपदाभिलाषेण भजतां सैव तत्तद्दैवताकारेण उचितफलं ददातीति भावः । अत्र एकस्याः शिवाख्यायाः भक्तफलप्रदानार्थं शिवाद्याकारेण परिणामात् परिणामालङ्कारः । " परिणामः क्रियार्थश्चेत् विषयो विषयात्मना " इति । अनेन उपासकफलसिद्ध्यर्थं रूपकल्पनात् परब्रह्मत्वं व्यज्यते ॥

फलवितरणविषये नाम्ना तुल्या बहवः सन्ति इत्याशङ्कायामाह—

**श्रुता ये स्वर्धेनुत्रिदशतरुमुख्यास्त्वदनुगा-**
**नुगानां भ्रूवल्लीवलनवशगास्ते जगति तान् ।**
**तवौदार्ये मातर्धरणिधरजानेतुरभिधे**
**कथङ्कारं तुल्यान्कथयतु सलज्जो यदि जनः ॥**

श्रुता इति । हे धरणिधरजानेतुरभिधे पार्वतीपतेराख्ये कथङ्कारं कथमिति कृत्वा कं प्रकारमाश्रित्येत्यर्थः । अन्यथैवंकथमिति णमुल् । अन्यत्स्पष्टम् । कल्पतरुप्रभृतयः त्वत्कटाक्षवीक्षाधीना इति भावः । अत्र

सम्भावनालङ्कारः। अनेनालङ्कारेण कामधेनुप्रभृतीनामपि त्वद्भक्तकटाक्ष-तौल्याभावे सिद्धे त्वत्तौल्याभावे अस्य किमु इति कैमुत्यालङ्कारो व्यज्यते। सकलसुखदां शिवाभिख्यां जानन् को वा केवलस्वर्गिणां यत्किञ्चित् रम्भादिभोगसाधनस्रक्चन्दनादिदातॄन् कल्पकादीन् तया तुलयत्विति सलज्जपदेन व्यज्यते ॥



त्वद्भृत्यभृत्याः एतादृशमहिमानश्चेत् त्वद्भक्ताः कीदृशमहिमानः इत्याशङ्क्याह—

**विधातुं संत्रातुं विलयमपि नेतुं जगदलं**
**भवन्तोऽपीशाख्ये प्रशमसमुपेतास्त्वदनुगाः।**
**उपेक्ष्या लोकस्यावमतसकलाः सन्ति जगति**
**त्वयैवैके तुष्टास्तव खलु त एते रसविदः ॥२७॥**

विधातुमिति। हे ईशाख्ये जगत् कर्म विधातुं सन्त्रातुं विलयमपि नेतुं अलं भवन्तोऽपि समर्थाः सन्तोऽपि प्रशमः शान्तिः तेन समुपेताः सहिता अत एव अवमतसकला निरस्तसमस्तविषयाः। अथवा कलया सत्त्वरजस्तमोगुणात्मिकया माययेति यावत्; तया सहिताः सकलाः हरिहरादिव्यक्तयः अवमताः यैः। अथवा अवमतः सकलः द्वन्द्वः (?. सेन्दुःशिवः) यैः शिवादप्यधिका इत्यर्थः। अनेन नामभक्ताः शिवादिव्यक्त्युपासननिरपेक्षा इति व्यज्यते। त्वदनुगास्ते अत एव लोकस्योपेक्ष्या। "हरे राम हरे राम राम राम हरे हरे। हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे" इति। "यः शिव इति वाचं विसृजेत्

तेन सह संवसेत्" इति **कलिसन्तरणोपनिषदं जाबालोपनिषदं** च जानद्भिः लोकैः जनैः उप समीपे ईक्षितुं द्रष्टुं योग्याः नाममहिमवेदिभिः सर्वपापनिवृत्तये नामभक्ताः समीपकाले द्रष्टव्या इत्यर्थः। तथा च **भागवते** (१०. ४८. ३१)—"नह्यम्मयानी"ति। **आचार्याश्च** (मोहमुद्गरे) "त्रिजगति सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका" इति। अथवा उः शिवः तं पाति रक्षति इति (उपः हरिः) तथा तेन ईक्ष्या हरिज्ञेयमहिमान इति यावत्। अत्र भस्मासुरगाथाऽनुसन्धेया। सन्ति वर्तन्ते। इतरे तु न वर्तन्त इत्यर्थः नामब्रह्मनिष्ठानां न कदापि नाश इति भावः। तथा च **गीतायाम्** (९. ३१) "कौन्तेय प्रतिजानीहि न मे भक्तः पणश्यति" इति। जगति एके केचित् केवला वा "एके मुख्यान्यकेवला" इत्यमरः। वीतमाया इत्यर्थः। त्वयैव तुष्टा हृष्टा भवन्तीति भावः। अत एव खलु रसविदः सारग्राहिणः ब्रह्मविद इति यावत्। नान्ये "रसो वै सः। रसꣳ ह्येवायं लब्ध्वानन्दी भवती"ति श्रुतेः (तै. २. ७)। आख्याभक्ता एव नित्याः शान्ताः निरतिशयानन्दा इति भावः। अथवा त्वयैव तुष्टाः एके खलु अन्ये खलु वेदान्तविचारका अपि नैतादृशा इति भावः। त्वयैव ये तुष्टाः त एते खलु रसविदः एके खलु रसविदः एके मुख्याः नान्ये व्यक्त्युपासकादयः। अथवा त्वयैव ये तुष्टाः त एते खलु एके केवला रसविदः नान्ये तवैके मुख्याः ब्रह्मविष्णुरुद्रापेक्षयाऽधिका इति भावः। अत्र ब्रह्मविष्णुरुद्राणां नामभक्तानां च स्रष्टृत्वादिगुणसाम्येऽपि भक्तेषु शान्त-

गुणविशेषदर्शनात् व्यतिरेकालङ्कारः । अनेन नामवोढ्रपेक्षया नामकीर्तकस्यातिशयो व्यज्यते ॥

सिंहावलोकनन्यायेन "परित्यज्ये"ति श्लोकार्थमनुस्मृत्य शिवाख्याकीर्तने किं वाऽभिरोचकमित्याह—

**शिवाख्ये त्वद्वर्णद्वितयमयि धत्ते श्रितवतां**
**मुखेऽधर्मब्रह्मप्रमितिकरसर्वाक्षरगणम् ।**
**पदे धत्ते वेधःप्रभृतिविभवान्नात्र तु रति-**
**र्विनैषां त्वद्वर्णद्वितयमिह कोऽयं मधुरिमा ॥ २८ ॥**

शिवाख्य इति । अयि शिवाख्ये त्वद्वर्णद्वितयं तवाक्षरयुगलं मुखे अग्रभागे। अधर्म नास्ति धर्मो यस्मिंस्तच्च तद्ब्रह्म च त्रिमूर्त्यतिरिक्तम् इति यावत् । तस्य प्रमितिः प्रमा तां करोतीति करः स चासौ सर्वाक्षरगणश्च सर्ववेदान्तवाक्यमित्यर्थः धत्ते वेदान्तप्रतिपाद्यं वस्तु अर्थतो वहति । वकारस्याऽमृतवाचकत्वादयमर्थः । पदे आदिभागे वेधःप्रभृतिविभवान् सगुणब्रह्मादिसुखानि धत्ते । शकारस्य सुखवाचकत्वादयमर्थः । अनेन आख्यायाः सुखामृतस्वरूपत्वमुक्तं भवति । अतः त्वद्वर्णद्वितयं विना एषां श्रितवतां त्वत्कीर्तनं कुर्वतां त्वां विना अत्र लोके रतिर्नास्तीत्यर्थः । अत इह नामब्रह्मणि कोऽयं मधुरिमा कियन्माधुर्यम् ? पृथ्वादित्वादिमनिच्। अनिर्वचनीयमाधुर्यमित्यर्थः । अत्र नाम्नः सुखामृतस्वरूपत्वनिर्वचनात् निरुक्त्यलङ्कारः विनोक्तिश्च "विनोक्तिस्तु विना किञ्चित् प्रस्तुतं हीनमुच्यते । निरुक्तियोगतो नाम्नामन्यार्थत्वप्रकल्पनम्" इति । अनेन शिवाख्याकीर्तकस्यैव सारग्राहित्वं व्यज्यते ॥

सत्यामपि सर्वसम्पदि शिवाख्यायाः करुणा नास्ति न वेत्याशङ्का-यामाह—

**महेशाख्ये जिह्वाञ्चलकलनमात्रात्तनुभृतां**
**समस्ताघच्छेत्रीं सकलसुखदात्रीं च भवतीम् ।**
**अवष्टभ्यैवाहुर्भगवति महाकारुणिकतां**
**शिवस्य त्वां हित्वा कथय कतमो निर्वहतु ताम् ॥**

महेशाख्य इति । त्वाम् आहुः ब्रुवन्ति (आहो ब्रुव इत्याहादेशे लट्) । जना इति शेषः । त्वदवलम्बिनं शिवं विना महाकारुणिकत्वं न कोऽपि निर्वहेदिति भावः । स्पष्टमन्यत् । त्वदाश्रितस्य शिवस्यैव महा-कारुणिकत्वसाधनेन अन्येषां महाकारुणिकत्वप्रतिषेधात् आक्षेपालङ्कारः । अनेनाख्याश्रयस्थशिवस्याऽपि महाकारुणिकत्वप्रतिपादनेन आख्याया महादयालुता कैमुत्यन्यायसिद्धा इति अर्थापत्तिर्व्यज्यते ॥

आख्याश्रययोर्हरिहरयोर्मध्ये कथं शिवस्यैव महाकारुणिकत्वमि-त्याशङ्कायामाह—

**शिवाख्ये स्वाख्यासु त्रिपुरमथनः कैटभरिपु-**
**स्तदीयान्या मूर्ती रघुपतिरपि त्वां समदधुः ।**
**अमीष्वाद्यस्यैव प्रभवति भवत्या व्यवहृति-**
**स्तदीयस्तादृक्षस्सुकृतपरिपाको विजयते ॥ ३० ॥**

शिवाख्य इति । त्रिपुरमथनः कैटभरिपुः तदीया हरिसम्बन्धिनी अन्या मूर्तिः रघुपतिः । अपि समुच्चये । स्वाख्यासु स्वनामसु त्वां शिवाख्यां

समदधुः सम्यग्धृतवन्तः (डुधाञ्धारण इति लट्)। अमीषु शिवादिषु मध्ये आद्यस्यैव हरस्यैव भवस्या शिवनाम्ना व्यवहृतिः व्यवहारः प्रभवति समर्थो भवति (प्रभ्वादियोगे षष्ठ्याऽपि साधुः इति शासनात) झटिति प्रथमबोधविषयत्वात्। तत्कुत इत्याह—तदीय इति। तदीयः शिवसम्बन्धी तादृक्षः अनिर्वचनीयः सुकृतपरिपाकः पुण्यपरिणामः विजयते। प्रथमतः शिवशब्दबोधकत्वं महाफलमिति भावः। अत्र शिवाख्यया हरस्य प्रथमबोध्यत्वरूपहेतुना तत्सुकृतविशेषस्य साधितत्वात् अनुमानालङ्कारः। त्रिपुरमथन इति पदेन हरस्य सकलोत्कर्षो व्यज्यते॥

शिवाख्यायाः महादयालुतां स्मृत्वा निन्दया तामेव स्तौति—

**अशेषब्रह्माण्डाविरतचरिताशेषदुरिता-**
**न्यलं ते सन्तृप्तिं न हि घटयितुं तां घटयितुम्।**
**मदीयैरेनोभिर्मदनमथनाख्ये बत यते**
**ममागः सोढव्यं तदिदमयि तुभ्यं नम इदम् ॥३१॥**

अशेषेति। हे मदनमथनाख्ये सर्वप्रपञ्चोत्पादकदेवताविशेषनिवारकाभिधे ते तव अशेषब्रह्माण्डाविरतचरितानि अशेषदुरितानि समस्तजनानुष्ठितपापजालानि कर्तृणि सन्तृप्तिं घटयितुं नाऽलं न समर्थानि भवन्ति हि। तां तृप्तिं मदीयैः एनोभिः पापैः "कलुषं वृजिनैनोघ" मित्यमरः। घटयितुं यते यत्नं करोमि (यतो प्रयत्न इति लट्) बत खेदे। अतिथेरुचितानामसमर्पणात् आगस्तन्निमित्तकोऽपराधः। त्वया सोढव्यं सहनीयम् (षह मर्षण इति धातोः तव्यप्रत्ययः।) सादरादकिञ्चनात्किञ्चिद्गृहीत्वा

अतिथिर्बहु मन्यते तद्वदिति भावः। तथाच **गीतायां** (९. २६)—
"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" इति। तथापि अपराधक्षमार्थं यत्किञ्चित्कर्तव्यमित्याह—अयि इति। अयि शिवाख्ये तुभ्यं नमः 'नमः स्वस्ती'त्यादिना चतुर्थी। तथाचार्षं वचनम्—'अपराधाः प्रणामतः' इति। सर्वलोकसर्वपापनिवर्तनपटुतरस्य शिवनाम्नः एकपापपरिशोधनं कियत् इति भावः। सर्वलोकपापपरिहारेणापि तृप्तिमलभमानायाः शिवाख्यायाः एकपापप्रदानेन विषमतृप्तिदर्शनात् विषमालङ्कारः। "विषमं वर्ण्यते यत्र घटनाऽननुरूपयोरि"ति। अनेन वाक्यार्थेन शिवाख्या तावत् भक्तस्य सवासनं पापं निवारयतीति व्यज्यते॥

पूर्वोक्तार्थमेव स्वानुभवेन स्फुटयति—

**अये जिह्वापीठे जननि समवस्थाप्य भवतीं**
**ममाघौघं तुभ्यं मयि समुपहर्तुं व्यवसिते।**
**तव स्मृत्यैवाऽसौ बत कबलितः किं नु करवै**
**क्षमस्वेमं मन्तुं भगवति पुरांभेत्तुरभिधे॥ ३२॥**

अये इति। अये पुरांभेत्तुरभिधे जननि भगवति सर्वज्ञे भवतीं जिह्वापीठे रसनासिंहासने समवस्थाप्य प्रतिष्ठाप्य उच्चार्येति यावत्। ममाऽघौघं पापराशिं समुपहर्तुं सम्यगुपदीकर्तुम् "उपहारस्तथोपदा" इत्यमरः निःशेषेण परिहर्तुमिति यावत्। मयि व्यवसिते निश्चयं प्राप्नुवति सति तवाख्यायाः स्मृत्यैव स्मरणेनैव अघौघः कबलितः

निवारितः । तथा चार्षं वचनम्—"अशुभानि निराचष्टे तनोति शुभसन्ततिम् । स्मृतिमात्रेण यत् पुंसां ब्रह्म तन्मङ्गलं परम्" इति । अहं किन्नु करवै किं कुर्याम् (कृञ् धातोर्लोडात्मनेपदम्) । मयि किमप्यागो नास्तीति भावः । तत्कुतः पुरांभेत्तुरभिधे मायाकल्पितशरीरत्रयनिवारकाख्ये इत्यर्थः । भगवतीति पदेन अघकबलनकर्तृत्वं तज्ज्ञातृत्वं च आख्याया एव गम्यते । तथापि प्रभुनिकटे तत्कृतापराधः (न) प्रकटनीयः सेवकेनेतिवत् आख्याकृतापराधं स्वस्मिन्नेवारोप्य प्रार्थयते क्षमस्वेति । इमं पूर्वकृतमपराधं क्षमस्व (क्षमु सहन इति धातोर्लोट्) अल्पदानाशक्तेनापि प्रणामादिकं कर्तव्यमिति । तथा च **गौतमः** "कल्याणीं वाचं विसृजेत्" । अयं भावः त्वत्स्मृत्यैव सर्वपापविनिर्मुक्तो भवत्कीर्तक इति । तथा च **स्मृतिः** (विष्णुपुराणं २. ६)—"प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥" इति प्रभृतीनि बहूनि प्रमाणानि सन्ति । अत्र आख्याकीर्तनप्रसक्तिमात्रेण हेतुना सर्वपापपरिहाररूपकार्यनिर्वाहात् चपलातिशयोक्त्यलङ्कारः "चपलातिशयोक्तिः स्यात् कार्ये हेतुप्रसक्तिजे" इति । अत्र आख्याया जिह्वापीठाद्युपचारकरणेन अप्रस्तुतातिथिसत्कारप्रतीतेः समासोक्तिः जिह्वापीठेति रूपकानुप्राणिता । तयोः संसृष्टिः । अनेन वाक्यार्थेन शिवाख्याकीर्तनसाध्यसर्वपापपरिहारस्य तत्स्मरणेनैव लब्धत्वात् कवेः पापाभावत्वं व्यज्यते ॥

स्वयमपापोऽपि लोकरक्षणार्थं दयालुतया स्वस्मिन् पापित्वमारोप्य आख्यां प्रत्याह—

**निवेशो जिह्वायां निरवधिकपुण्योच्चयजुषां**
**निसर्गप्राप्तस्ते निटिलनयनाख्ये भवतु तत् ।**
**निवेशं जिह्वायां मम यदि न धत्से जननि ते**
**नितान्तं पापिष्ठोऽवित इति न सिद्ध्येन्ननु यशः ॥**

निवेश इति । हे निटिलनयनाख्ये सकललोकविलक्षणेक्षणाख्ये तव निरवधिकपुण्योच्चयजुषां बहुळसुकृतप्राचुर्यमुपेयुषां जनानां जिह्वायां निवेशः स्थितिः निसर्गप्राप्तः स्वभावसिद्धः । अनेन निष्पापा एव शिवाख्यां न त्यजन्तीति व्यज्यते । इति यत् तत्तिष्ठतु 'ष्ठा गतिनिवृत्तौ' विति लोट् आमन्त्रणे । तर्ह्यन्यत् किं कर्तव्यमित्यत आह जननीति । हे जननि मम जिह्वायां निवेशं स्थितिं न धत्से यदि न कुरुषे यदि ते तव नितान्तं बाढं पापिष्ठः महापापी 'इष्ठन् प्रत्ययः' अवितः रक्षित इति यशः पतितपावनेति कीर्तिः न सिद्ध्येन्ननु न भवेन्ननु । ननु प्रसिद्धौ । त्वद्यशःप्रसिद्ध्यन्यथानुपपत्त्या मम जिह्वायां नित्यं निवस इति भावः । अत्र सम्भावनालङ्कारः । अनेनालङ्कारेण शिवाख्यैव सर्वपापनिवारिकेति व्यज्यते ॥

महाकारुणिकस्यापि कदाचित्किंचित् आश्रितजनपापबाहुल्यात् कार्पण्यं सम्भवति । तद्वच्छिवाख्याया अपीत्याशङ्क्याह—

**शिवाख्ये मातस्त्वं ननु शशिवदित्यादिफणिति**
**च्छलादप्याविश्य श्रमभरमकस्मात्तनुभृताम् ।**
**हरस्येवं कर्तुं हरिरथ हरो वा स किमलं**
**तदीयं माहात्म्यान्तरमपलपामस्तु न वयम् ॥३४॥**

शिवाख्ये इति । हे शिवाख्ये मातः त्वं शशिवदित्यादिफणिति-च्छलात् आनुषङ्गिकशिवनामकीर्तनव्याजात् आविश्य तनुभृतां देहिनां श्रमभरं दुःखजातम् अकस्मात् हेतुं विना हरसि ननु प्रसिद्धौ । एवं हरिर्वा हरो वा कर्तुं किमलं नालमिति काकुः । तर्हि हरिहरयोः निर्महिमत्वं वा इत्याशङ्क्याह—तदीयमिति—तदीयं हरिहरसम्बन्धि (छ प्रत्ययः) महात्मनो भावो माहात्म्यम् अन्यन्माहात्म्यं माहात्म्यान्तरं पालकसंहारकत्वादिकं त्वदाश्रयलब्धं नापलपामः न निह्नुमहे (लपधातोर्लट्) । त्वं कायक्लेशादिकमनपेक्ष्यैव बलात्कारेण अनुनयेन वा भक्तेभ्यो महाफलं ददासीति भावः । अत्र हरिहरयोः आश्रितजनश्रमभरहारित्वे सत्यपि अक्लेशेनाख्यायाः तादृशकार्यकारित्वरूपविशेषदर्शनाद्व्यतिरेकः । स च व्याजोक्त्यनुप्राणितः । अनेन वाक्यार्थेन बालस्य रोगशान्तये गुळखण्डपिण्डितौषधसमर्पणे सन्तुष्टाया मातुश्चरित्रप्रतीतेः समासोक्तिर्व्यज्यते ॥

शिवाख्याया आकस्मिकरक्षकतां स्मृत्वा कौतुकात्तदेकशरणो भवामीत्याह—

**पितृभ्यां त्यक्तोऽसावहमपि दुरात्मेति गिरिजा-**
**गिरीशाभ्यां त्यक्तो ननु जननि लोकेन च तथा ।**
**ममास्त्यन्या काचित् जगति न गतिर्यामि शरणं**
**शिवाख्ये त्वामेकामयि जहिहि वा मां बिभृहि वा ॥**

पितृभ्यामिति । पितृभ्यां मातापितृभ्यां पितामात्रेति पितृशब्दस्यैकशेषः । असौ पुत्रः दुरात्मा दुर्मनाः अथवा (दुष्टः) अविद्यादोषयुक्तः

आत्मा ब्रह्म यस्य स इति । त्यक्तः दूरीकृतः गिरिजागिरीशाभ्यां त्यक्तः लोकेन तदितरजनेन च तथा त्यक्तो ननु त्यक्त इत्यर्थः । ननु प्रसिद्धौ । पित्रोरनर्हं पुत्रं न कोऽप्यङ्गीकुर्यादिति भावः । इति हेतोः मम सर्वत्यक्तस्य जगति कापि गतिर्नास्ति । तर्हि संसारनिवृत्तये शरणं मास्तु वेत्याशङ्क्याह—अयीति । अयि शिवाख्ये त्वामेव शरणं रक्षित्रीं यामि प्राप्नोमि (या प्रापण इति लट्) अहमेतादृशोऽपि सर्वत्यक्तत्वादापाततो लोकरीत्या आख्यायाः सांशयिकतां निरूपयति । त्वं मां जहिहि वा त्यज वा । बिभृहि वा रक्ष वा (भृञ् भरण इति लोट्) । अयं सर्वं परित्यज्य मामेवाश्रयत इति कृपया पालयेत्यर्थः । इतः परमिति शेषः । अस्मिन्युगे संसारतरणाय यत्कर्तव्यं तन्मया कृतम् अतो मद्रक्षणम् अनाकस्मिकमिति भावः । अत्र पितृत्यक्तत्वकारणात् शिवत्यक्तत्वं तेन लोकत्यक्तत्वमिति कारणमालादर्शनात् गुम्फालङ्कारः । "गुम्फः कारणमाला स्यात् यथा प्राक्प्राप्तकारणैः" । त्यागदानयोरुक्तत्वात्सन्देहालङ्कारश्च । तयोः संसृष्टिः । अनेन योऽनन्यगतिकः शिवाख्यां भजते तं तदीयबन्धः वस्त्वन्तरास्तित्वबुद्धिश्च मुञ्चतीति व्यज्यते ॥

कोटिद्वये प्रथमपक्षमेव गृह्णातीत्याशङ्क्याह—

**परित्याज्यं सर्वेऽप्यभिदधति पापिष्ठमयि ते**
**शिवाख्ये संग्राह्यः स जयति तवैतत्समुचितम् ।**
**प्रपन्ना त्वं किं नोदयिनि गरळे चामृतरसे**
**पयोधेस्तत्राद्यग्रहणरसिकं तं प्रभुमणिम् ॥ ३७ ॥**

परित्याज्यमिति । सर्वेऽपि जनाः यं पापिष्ठं परित्याज्यं, विधेय-विशेषणम्, अभिदधति वदन्ति (अभिपूर्वाद्धाञो लट्) स जनः अयि शिवाख्ये तव सङ्ग्राह्यः प्रथमग्राह्यः जयति (जि जय इति लट्) । ते तव एतच्चरित्रं समुचितं युक्तम् । कुत इति चेत् पयोधेः क्षीराब्धेः उदयिनि उत्पत्तिमति गरळे कालकूटे अमृतरसे च तयोर्मध्ये आद्यग्रहणरसिकम् आदौ भवः आद्यः तस्य ग्रहणे रसिकं रसाभिज्ञम् (अत इनिठनाविति ठन्) तं प्रभुमणिमीश्वरं मणेर्गरळदोषनिवर्तकत्वादेवं प्रयोगः । अनेन शिवस्य परमदयालुता व्यज्यते । नो प्रपन्ना न गृहीतवतीति काकुः । अत्र सर्वलोकपरित्यक्तरक्षणरूपनिन्दया पापिष्ठमप्यनन्यगतिकं शिवाख्या रक्ष-तीति स्तुत्यभिव्यक्तेः निन्दास्तुतिः । शिवाख्यायाः सर्वत्यक्तरक्षकत्वस्य कालकूटभक्षकशिवव्यक्त्यङ्गीकाररूपहेतुना समर्थितत्वाद्धेत्वलङ्कारः ॥

एतादृशपापिष्ठधीरतां निरूपयति—

**ममाजस्रं दोषान् समुपघटयन्तोऽन्तररयो**
**जयन्तीशः पश्यन् हृदि वसति मद्दौस्थ्यमखिलम् ।**
**अथैवं सत्यागोऽखिलमपलपन्त्यम्ब बिभृषे**
**कथं मामीशाख्ये कथय तव कः स्तौतु विभवम् ॥३७॥**

ममेति । ममान्तः अन्तःकरणे अरयः कामादयः अजस्रं सन्त-तम् मद्दोषान् मद्दुरितानि समुपघटयन्तः उत्पादयन्तः जयन्ति जा-गरूका वर्तन्ते । अखिलं दौस्थ्यं दुस्थभावं दौष्ट्यमिति यावत् । पश्यन्

जानन्नीशः साक्षी वसति वर्तते । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति स्मृतेः (भ. गी. १८–६१) । "आन्तरो यमयती"ति श्रुतेश्च (बृ. ३–७.) । अथेति प्रश्ने । एवं सति दोषसूचकेषु सत्सु साक्षिणि च त्वद्वाच्ये सतीत्यर्थः । अखिलं मदीयम् आगः पापं हे शिवाख्ये अपलपन्ती अपह्नुवाना सती कथं बिभृषे केन प्रकारेण रक्षसि रक्षणप्रकारं वद (कथ वाक्यप्रबन्ध इति लोट्) । ममेत्यनुषज्यते । त्वमेव जानीहि किं मां पृच्छसि इत्यत आह क इति । कस्तव विभवं महिमानं स्तौतु वर्णयतु न कोऽपीत्यर्थः (ष्टुञ् स्तुताविति लोट्) । कामक्रोधादिजनितपापनिचयफलप्रदातारमीश्वरमपि निराकृत्य शिवाख्या स्वभक्तं रक्षतीति भावः । अथवा शिवाख्या स्वभक्तस्य कामक्रोधाद्यरिषड्वर्गं हरति स्वव्यतिरिक्तो देवः स्वाश्रितस्यान्तःकरणे नास्तीति च । अत्र कामक्रोधाद्यभिभूतमपि रक्षतीति निन्दास्तुतिः । अप्रस्तुतार्थप्रत्यर्थिव्यवहारनिर्णायकराजवृत्तान्तप्रतीतेः समासोक्तिश्च तयोः सङ्करः । अनेन वाक्यार्थेन शिवाख्याभक्तानां न किञ्चिदपि प्रतिबन्धकमिति व्यज्यते ॥

अथापि शिवाख्याया रक्षणचातुर्यं यथामति विवृणोति—

**स्फुटायां द्वारीशेतरमितरया साधु नयते**
**यथा प्राप्यस्थानं सुहृदिह मनोज्ञ्रगभिधे ।**
**स्वकर्मादावीशेतरमिममखेदं शिवपदं**
**तथा कल्याणि त्वं ननु कलयसि त्वत्कलनया ॥ ३८ ॥**

स्फुटायामिति । द्वारि प्रभुगृहद्वारि स्फुटायां विवृतकवाटायां "स्त्रीद्वार्द्वारम्" इत्यमरः । सुहृत् शोभनमनः मित्रमिति यावत् ।

इतरया कलनया समर्थजनगणघटनया यथा प्राप्यस्थानं गन्तव्यप्रदेशं नयते प्रापयति (णीञ् धातोर्लट्) हे मनोजभ्रुगभिधे कामाहिताख्ये स्वकर्मादौ अग्निहोत्रादिकर्मणि ईशेतरमसमर्थम् अखेदमक्लेशं यथा तथा शिवपदं स्वस्थानं कलयसि प्रापयसि (कल संख्याने लट्)। ननु प्रसिद्धौ। सकलकर्मत्यागपूर्वकशिवाख्याश्रयाणां शिवाख्यैव क्षेमकारिणीति व्यज्यते। सुहृत् यथा उद्घाटितकवाटावसरं प्रतीक्ष्य विद्वत्सङ्घप्रवेशावसरे मूढमपि तन्मध्यपातिनं कृत्वा अन्तः प्रवेशयति तद्वत् अविद्याकवाटमुद्घाट्य स्वतादात्म्यं प्रापयतीति भावः। अत्र मूढस्य केवलशिवाख्याभक्तस्य च निष्प्रतिबन्धकप्रभुसदनान्तःप्रापणत्वसामान्यस्य चैकत्वात् प्रतिवस्तूपमालङ्कारः। "वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता" इति ॥

शिवाख्या तावत् त्यक्तस्वकर्माणमेव तारयतीत्याशङ्क्याह—

**स्वकर्मादावीशं जनमपि भवत्येव बिभृते**
**विना त्वां तस्यापि स्वविरचितसाद्गुण्यविरहात्।**
**बुभूषोः सर्वस्य त्वमसि तदुपास्या किमपरं**
**त्वयास्ते लब्धात्मा भगवति शिवाख्ये स च शिवः ॥**

स्वेति। हे भगवति शिवाख्ये स्वकर्मादौ यज्ञदानतपःकर्मणि ईशं समर्थं जनं भवत्येव बिभृते रक्षति। त्वां विना तस्य कर्मादिनिष्ठस्य। अपरिगर्हायां केवलकर्मणां तमःप्रकृत्या अनुष्ठितत्वादेवमर्थः। स्वविरचितसाद्गुण्यविरहात् स्वकर्माङ्गवैकल्यादिहेतोः तस्मात् त्वं बुभूषोः देवादिभवनेच्छोः (इच्छायां सन् ततः सनाशंसभिक्ष उः)। सर्वस्याप्युपास्या

भवतीत्यर्थः। तदेवोपपादयति—स इति। स प्रसिद्धः शिवश्च अप्य-र्थश्चः त्वयात्वत्सकाशात् लब्धात्मा त्वद्वाच्यत्वेन प्राप्तस्वरूपः आस्ते वर्तते त्वां विना तस्य नामापि न श्रूयत इति भावः। यद्वा हे शिवाख्ये स्वकर्म स्वकृतं कर्तुं। आदौ पूर्वम् ईशं जनम् उत्पादकपालकसंहारकब्रह्मविष्णु-रुद्रात्मकमिति यावत्। बिभृते वहति जनयतीत्यर्थः नामब्रह्माविवेकिनामेव पूर्वसुकृतवशात् त्वमेव त्रिमूर्त्यात्मकतया प्रकाशसे इति भावः। बुभूषो-रवताराभिलाषवतः सर्वस्य तस्य ब्रह्मविष्णुरुद्ररूपजनस्यापि त्वां विना स्वविरचितसाद्गुण्यविरहात् स्वविरचितानां सुकृतानामित्यर्थः साद्गुण्यं सद्गुणस्य भावः त्वदाश्रयसाधुजन्मरूपं तस्य विरहात् त्वमेवोपास्या भवसि आश्रयणीया वर्तसे। तथा च **भागवते**—"एतन्निर्विद्यमाना-नामिच्छतामकुतोभयम्। योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम्" इति। उक्तं चैतत्कविना "तदीयस्तादृक्षः सुकृतपरिपाको विजयते" इति। हे भगवति शिवाख्ये यतस्त्वया स च शिवोऽपि लब्धात्मा आस्ते त्वदन्यत्किं वक्तव्यमिति शेषः। कर्मठानां रक्षणे शिवाख्याकीर्त-नस्य हेतुत्ववर्णनात् हेत्वलङ्कारः विनोक्त्यनुप्राणितश्च। अत्र प्रकारान्त-रेण वर्णनात् 'परित्यज्याशेष'मिति श्लोकेन न पौनरुक्त्यम्॥

एतच्छिवादिव्यक्त्युपासकानामन्तरङ्गं नालिङ्गतीति मत्वा दृष्टा-न्तान्तरं दर्शयति—

**सुतस्याख्यां नारायणगिरमुपादत्त यदजा-**
**मिळस्तं तद्गीतास्तपनसुतदूता प्रविजहुः।**

**त्वमीशाख्ये भीतिं नयसि विमतांस्ते मुदमथा-**
**नुगान्कारुण्यार्द्रास्त्वहह निखिले ते त्वदनुगाः ॥४०॥**

सुतस्येति। यत् यस्मात् सोऽजामिलः अन्ते चरमवेलायां सुतस्य नारायणनाम्नः तन्नाम उपादत्त उक्तवान् (डुदाञ् धातोर्लङ्) तस्मात् तमजामिलं तगनसुतदूताः यमभटाः भीताः सन्तः प्रमादाद्भगवन्नामकीर्तकनिकटं प्राप्ता वयमिति त्रस्ताः सन्तः। तथा च **भागवते**—"कमल नयने"त्यादि। प्रविजहुः तत्यजुः। हे शिवाख्ये त्वं विमतान् नामकीर्तनविमुखान् भीतिं नयसि। ते तव अनुगान् नामकीर्तकान् मुदमानन्दम् अथ नयसि कार्त्स्न्येन प्रापयसि। शिवाख्या स्वभक्तविरोधिनः कथं न शिक्षितवती इत्यत आह—निखिल इति। निखिले शत्रुमित्रसमुदये त्वदनुगाः कारुण्यार्द्राः दयाशालिनः सन्तीति शेषः। अहह तव भक्तमनोरथानुसारितेत्याश्चर्यम्। अयं भावः प्रासङ्गिकेनापि भगवन्नामकीर्तनेनैव जनः मृत्युभयं तरतीति। "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः (ऋ. १०.९०)। अत्र यमभटाशिक्षणरूपविशेषेण शिवाख्याकीर्तकपरमदयालुतारूपसामान्यस्योक्तत्वात् अर्थान्तरन्यासः॥

एतादृशनामकीर्तकस्य अधिकारिमृत्युभयपरिहाररूपं फलं विज्ञाय तत्तात्पर्येण निरन्तरनामकीर्तकस्य 'श्रेयांसि बहु विघ्नानी'तिन्यायेन विघ्न भिया शिवाख्यामेव प्रार्थयते—

**कुसुमशरभिदाख्ये सुन्दरे त्वज्झरेऽस्मिन्**
**निरुपहति विहर्तुं नित्यमुदग्रीविताशम्।**

**अपनयसि किमेवं हन्त मामन्तरायैः**
**मनसि न कुरु मातर्मामकान् देवि मन्तून् ॥४१॥**

कुसुमेति। हे कुसुमशरभिदाख्ये दुर्बलमपि विरोधिनमसहमानाख्ये। अनेन स्वभक्तस्य कामादीन् निःशेषेण निवर्तयतीति व्यज्यते। सुन्दरे मनोहरे त्वज्झरे नामप्रवाहेऽस्मिन् विहर्तुं क्रीडितुं सानन्दं नाम कीर्तयितुमिति यावत्। उद्ग्रीविताशं सञ्जातोद्ग्रीवा आशा यस्य (तारकादित्वादितच्) मामन्तरायैर्विघ्नैः "विघ्नोऽन्तरायः प्रत्यूह"— इत्यमरः। अपनयसि वारयसि किम्। एवं पूर्वोक्तप्रकारेण वारणं चेत् हन्त कष्टं हे मातः देवि प्रकाशस्वरूपे त्वं मामकान् मदीयान् (तवकममकाविति ममकादेशः) मन्तूनपराधान् "आगोऽपराधो मन्तुश्च" त्यमरः। मनसि न कुरु न गणय (कृञोलोट्)। मातृत्वात् पुत्रापराधं सोढ्वैव ममाभिमतं समर्पयेति भावः। मातुः पुत्रापराधं सोढ्वैव तदभिमतसमर्पणस्य स्वभावत्वात् स्वभावोक्तिः परिकरानुप्राणिता च। यद्वा हे कुसुमशरभिदाख्ये सुन्दरे त्वज्झरे। अत्तीत्यत् भोक्ता जीव इत्यर्थः (क्विप्) "द्वा सुपर्णा सयुजा सखाये"ति श्रुतेः (मुण्डक. ३. १ १)। तस्य झरे अनेकजीवराशौ तन्मध्येऽस्मिन् अनुभूयमानब्राह्मणजन्मनि। तुरेवार्थे। निरुपहति निर्विघ्नं यथा तथा नित्यं सन्ततं विहर्तुम् उद्ग्रीविताशम् उद्बुद्धाशयम् मां देहात्मैक्यज्ञानवन्तम् अन्तरायैः पापकारणैः अपनयसि एतादृशब्राह्मणजन्म निवारयसि(किम)। तान् मामकान् मन्तून् मनसि न कुरु न स्मर इत्यर्थः। किमेतादृशप्रार्थनमित्याशङ्कायामाह—

हन्तेति । एतादृशवारणं चेत् त्वत्कीर्तनकुण्ठकं निश्रेयसादिकं भवेदिति हन्तार्थः । अत्र दुष्टस्य शरीरस्यापि शिवाख्याकीर्तनरूपगुणहेतोः तन्नैरन्तर्यप्रार्थनात् अनुज्ञालङ्कारः । "दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शना"दिति । अनेनालङ्कारेण शिवाख्याकीर्तनसाधनीभूतजन्मैव सर्वोत्कृष्टमिति व्यज्यते । तथा च **पुराणं** "कीटा नागाः पिशाचा वा ये वा के वा भवे भवे । तव दासा महादेव भवाम शरदः शतम्" इति । **भागवते** च—"न शूद्रा भगवद्भक्ता" इत्यादि । यद्वा पूर्वोक्त विशेषणविशिष्टं मामन्तरा विना (अन्तरा अन्तरेण युक्तेति द्वितीया) इतरानित्यर्थसिद्धम् । अयैः त्वत्कीर्तनरूपशुभविधिभिः निरन्तरनामकीर्तनं जन्मान्तराकृतनामकीर्तनविषयमिति ज्ञापयितुं बहुवचनम् । अन्यथा "एकान्तनिष्कृतिः शम्भोः सकृदेव हि कीर्तन" मितिवचनविरोधापत्तिः । तर्हि कथं नारदादयः सन्ततनामकीर्तनं कुर्वन्ति । तत्र शुभवासना· रुच्यानन्दादयो हेतवः । अपनयसि किं वारयसि किम् । एवं च सधर्मणां मध्ये एकस्यैव मम शुभं चेत् हन्त अतः स्वस्य तादृशपापित्वमाशङ्क्य सत्स्वभावतया शिवाख्यामेव प्रार्थयते मातरिति । हे मातर्मामकान् मन्तून् मनसि न कुरु मातुरर्भकापराधचिन्तनमयुक्तमित्यर्थः । यद्वा यैः पापैः मामपनयसि तान्मन्तून् मामकानिति विधेयविशेषणम् मनसि न कुरु अर्भकस्य कृत्याकृत्यविवेकासम्भवात् पुत्रापराधो मात्रा क्षन्तव्य एवेति भावः । अथवा बालकृतमागः पित्रोरेव इति हन्त स्वदोषमविज्ञाय परदूषणं तवापि इति हन्त ॥

कथञ्चिन्मम मातृत्वात् मया अङ्गीकृतं दुष्टमपि कथमन्ये सम्मन्ये-रन्निति आख्याया आशंकायामाह—

**किमकुरुत मुदे मे कर्म वर्णाश्रमार्हं**
**किमभजत मदङ्घ्रिं किं व्यधाद्देषको वा ।**
**इति निजसमितौ मामीक्षमाणे गिरीशे**
**मदनुग इति मातर्गर्जे धीरं शिवाख्ये ॥ ४२ ॥**

किमिति । एष मे मम मुदे प्रीतये वर्णाश्रमार्हं तयोरुचितं कर्म अकुरुत किं कृतवान् किं मदङ्घ्रिं मच्चरणमभजत सर्वकर्मपरित्यागपूर्वकं शरणागतिं प्राप्तवान् किम् । (भजधातोर्लङ्) । तथा च **गीतायां** (१८. ६६)–"सर्वधर्मान्। परित्यज्य मामेकं शरणं व्रज" इति । अन्यत् व्रतादिकं व्यधात्किम् (विपूर्वकाद्धाञोलुङ्) एतादृशानां मध्ये को वा किमा चारवानयमिति निजसमितौ स्वसभायां "सभा समिति संसद्" इत्यमरः । अनेन अयमेतादृश इति निश्चयाभावात् शिवस्यापि नामभक्तमहिमा दुर्ज्ञेय इति व्यज्यते । अथवा शिवाख्याभक्तानां शिवसभाप्रवेशो अन्तराळिक इति । गिरीशे शिवे ईक्षमाणे पश्यति सति हे शिवाख्ये मातः मदनुग इति निरन्तरनामकीर्तकत्वात् भवत्सभासदाम् एतत्सङ्गतिरावश्यकीति मयैतत्सभां प्रापितः न तु स्वत्पदाभिलाषुक इति धीरं निर्भयं गर्ज उच्चैर्वद । निरन्तरनामकीर्तनपराणां कर्मादिलभ्यशिवादिपदं विना साक्षान्मुक्तिरिति भावः । कर्माद्यपेक्षया निरन्तरनामकीर्तनस्य उत्कृष्टत्व-वर्णनात् सारालङ्कारः" "उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते" । अनेन

वाक्यार्थेन अयमेतादृश इति शिवाविदितार्थस्य स्मारकत्वात् शिवाख्याया एव सर्वज्ञत्वं व्यज्यते ॥

न तथा मया कोऽपि रक्षितः इत्याख्याया आशङ्कामुद्धाव्याह—

**जगति वशिगिरा त्वद्व्यत्ययेनोल्लसन्त्या**
**जननि परिगृहीतांस्त्वं स्वकर्मादिनिष्ठान् ।**
**न किमवसि शिवाख्ये हा तयानादृतं मा—**
**मवितुमिह विलम्बः कस्त्वदेकावलम्बम् ॥ ४३ ॥**

जगतीति । हे शिवाख्ये जननि व्यत्ययेनाऽऽनुपूर्वीव्यत्यासेन उल्लसन्त्यां प्रकाशमानयां स्वकर्मादिनिष्ठान् स्वाश्रमधर्मनिरतान् वशिगिरा शिवशब्देन परिगृहीतान् आक्रान्तमुखान् विधेयविशेषणम् ! त्वं नावसि किं रक्षस्येवेत्यर्थः (अव रक्षण इति लट्) । महाप्रयासप्राप्यत्वद्योतकमिदं वाक्यम् । तया व्यत्यस्तानुपूर्विकया आख्यया नादृतम् अनाक्रान्तमुखं यथा तथा क्रमोच्चारव्यमित्यर्थः । त्वदेकावलम्बं त्वत् त्वत्तः अन्यः एकावलम्बः मुख्यावलम्बः यस्य सः तं मामवितुं रक्षितुमिहास्मिन्विषये विलम्बः कुण्ठनं अत्वरा वा न कोऽपीत्यर्थः । नामब्रह्मावलंबिनः न कोऽपि प्रतिबन्धक इति भावः । यद्वा स्वकर्मादिनिष्ठान् प्राणिहिंसापरान् किरातादीन् वशिगिरा सप्तर्षिनिर्देशवचसा हे जननि शिवाख्ये व्यत्ययेनोल्लसन्त्या त्वयेति शेषः मरा-मरेति व्यत्यस्तानुपूर्विकया प्रकाशमानया त्वया परिगृहीतान् त्वं किं नावसीति काकुः । किरातरक्षणाद्यद्भुतचरित्रस्य सदा .बुद्धिस्थत्वाद्वर्तमानवन्निर्देशः । अनेनास्य कवेः सन्ततनामवैभवश्रवणं व्यज्यते । तया नादृतं मामवितुं त्वत् त्वां विहाय

एकावलम्बः को विलम्बः तद्धेतुर्न कोऽपीत्यर्थ । कदाचित् त्वमेव विलम्बहेतुर्भवेर्वा न वेति भावः। अथवा यं न रक्षणीय इति ललाटलिपिकारः कोऽपि ब्रह्मापि त्वदेकावलम्बः सन् विलम्बः तद्धेतुर्न भवतीति । तथा च **स्मृतिः**—"भर्जनं भवबीजाना"मिति । श्रुतिश्च "हरे राम हरे राम" **कलि संतरण**.१.) इत्याद्या । अत्र अयथावत्कृतनामकीर्तनानामपि मुक्तेर्दर्शनात् यथावत्कृतनामकीर्तनानां किमु वक्तव्यमित्यर्थापत्तिः । अनेन येन केन प्रकारेणापि शिवाख्यैव सर्वेषां रक्षिकेति व्यज्यते ॥

श्रुतिस्मृत्यादिभिः शिवाख्याया महाफलप्रदातृत्वे सिद्धे नराणां यज्ञादिकर्मानुष्ठायिनां धीमत्वे च सिद्धे मद्भजनमकुर्वतां किं वा हीयते इत्याख्याया आशङ्कायामाह—

**अम्ब त्वदीयमहिमाम्बुधिशीकराणु-**
**वेदी सुधीस्त्वयि निरन्तरवृत्त्यलाभे ।**
**ईशाभिधे भुवि समेतु न किं पिपासो-**
**रभ्यर्णगेऽम्भसि निरुद्धगतेरवस्थाम् ॥ ४४ ॥**

अम्बेति । अम्ब मातः। अम्बार्थनद्योर्ह्रस्वः । ईशाभिधे त्वदीयश्चासौ महिमा च स एवाम्बुधिः तस्य शीकरः कणः तस्याणुर्लेशः तं वेत्ति इति णिनिः । सुधीः निश्चितमतिः अथवा केवलशास्त्रमात्रपरिचयवान् । अनेन त्वन्महिमानं विद्वानपि कार्त्स्न्येन न जानातीति व्यज्यते । "यतो वाच" इति श्रुतेः (तैः २. ४) । त्वयि तव विषये निरन्तरवृत्त्यलाभे निरन्तरनामकीर्तनाप्राप्तौ सत्यामम्भसि अभ्यर्णगे समीपस्थे सत्यपि को निरुद्धगते

चरणादिवैकल्यप्रतिबद्धसञ्चारस्य पिपासोः पातुमिच्छोः अवस्थां कष्टां दशां न समेतु न प्राप्नोतु प्राप्नुयादेवेत्यर्थः (सम्पूर्वादिण् गतावित्यतो लोट्) । सर्वशास्त्रज्ञानानुष्ठानसम्पन्नोऽपि त्वद्विमुखः पापी कदाचिदपि संसारबन्धात् न विमुच्यत इति भावः । अत्र शिवाख्याविमुखानां नद्यादिजलपानप्रतिबद्धसामग्रीकपिपासूनां च अवस्थासाम्यनिरूपणा- तुल्ययोगितालङ्कारः । "वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिते"ति । तथा च **पुराणं**—"नारायणेति नामास्ति वागस्ति वशवर्तिनी । तथापि निरये घोरे पतन्तीत्येतदद्भुतम्" । अनेन वाक्यार्थेन शिवाख्याविमुखानां न कदापि तृष्णाशान्तिरिति व्यज्यते । विदुषामपि शिवनामविमुखानां भवबन्धो दुर्वार इति । तथा च **पुराणं**—"किं तात वेदागमशास्त्र- विस्तरैस्तीर्थैरनेकैरपि किं प्रयोजनम् । यद्यात्मनो वाञ्छसि मोक्षसाधनं गोविन्द गोविन्द इति स्फुटं वद" इति ॥

देवतान्तरोद्देश्यकयागादीनामपि फलनिष्पत्तये शिवाख्याकीर्तनस्य अवश्यकर्तव्यत्वमालोच्य स्वस्य संसारतारकशिवनामकीर्तनं कदाचिद्विगलेदिति भीत्या गुरुप्रसादमेव प्रार्थयते—

**इतो रोगाः कामादय इत इतः स्त्रीसुतमुखाः**
**कृतान्ताः सर्वत्रेत्ययमनवधिः क्लेशजलधिः ।**
**तमेतं चाह्लाय त्वदनुगदयोल्लासघटभूः**
**निपीयेशाख्ये मामभिरमयतु त्वत्परिसरे ॥ ४५ ॥**

इत इति। अयमनुभूयमानः क्लेशजलधिः अनवधिरपारः न चैतादृशसमुद्रसम इत्यर्थः। तत्कुतः? इतःएकत्र रोगा व्याधयः इतः कामादयः षडरयः इतः स्त्रीसुतमुखाः मदीयबन्धाः सर्वत्र सर्वस्मिन् देशे काले च कृतान्ता मृत्यवः सन्तीति शेषः। इत्येवंप्रकारेण स्थितं तं दुःखसागरमेनं हे शिवाख्ये त्वदनुगदयोल्लासघटभूः नामकीर्तक कृपोज्जृम्भ एव अगस्त्यः निपीय निःशेषीकृत्य त्वत्परिसरे त्वत्समीपे मां त्वदेकशरणं सर्वदेशकालावच्छेदेन अभिरमयतु क्रीडयतु (रमुक्रीडायामितिणिचि लोट्)। तथा च श्रुतिः (छो. ६.१४.२) "आचार्यवान् पुरुषो वेद" इति। अत्र क्लेशस्य जलधित्वेन रूपणात् भक्तदयाया अगस्त्यत्वरूपणाच्च रूपकालङ्कारः। अनेन भगवन्नामसंगिसंगविमुखानां न कदापि क्लेशहानिरिति भावः। अगस्त्यपदेन "सर्वेषां ब्राह्मणो गुरु" रिति व्यज्यते॥

अशिष्यलक्षणं मां सन्तोऽङ्गीकुर्युर्वा न वेति संशय्य सदैन्यमाह—

**अम्ब प्रसीद कुरु मामनघं बलात्त्व-**
**मङ्के च ते कुरु निषण्णममुं शिवाख्ये।**
**जम्बालसक्तममलं कुरुते न माता**
**किं बालकं न कुरुतेऽङ्कजुषं च दृष्ट्वा॥ ४६॥**

अम्बेति। हे शिवाख्ये मयि प्रसीद प्रसन्ना भव (षद्लृ गताविति लोट्)। तत्फलमेव विवृणोति त्वमिति। त्वं मां देहात्मैक्यज्ञानवन्तम् अनघं तादृशज्ञानरहितं बलात् मदीयः शिशुः गम्भीरसंसार

पाताले परिवर्तनपरिश्रान्त इति सदयानुरागं प्रसभात् कुरु रचय। तवाङ्के उत्सङ्गे अमुं भक्तं निषण्णं कुरु स्थापय त्वया सह मामेकीकुरु इति यावत्। स्पष्टमन्यत्। एतत्सर्वं प्रसिद्धदृष्टान्तेन साधयति। सर्वेषां शिवाख्यैवाऽज्ञाननिवर्तिकेति भावः। अत्र शिवाख्याया मातुश्च कविरक्षणविषये बिम्बप्रतिबिम्बभावदर्शनात् दृष्टान्तालङ्कारः। "चेद्बिम्ब-प्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः" इति ॥

स्वप्रयोजनमनपेक्ष्यैव को वा परकार्ये प्रवर्तते इति लोकरीति-माशङ्क्याह—

**आविर्भवस्ययि नृणां त्वमयत्नतोऽग्रे**
**ग्लानिं धुनोषि घटयस्यपि मङ्गलानि।**
**ईशाभिधे तव यशो न किमुज्जिहीता-**
**मीर्ष्याकुलत्वममरा न किमश्नुवीरन् ॥ ४७ ॥**

आविरिति। ईशाभिधे त्वं नृणामग्रे मुखभागे अयत्नं यथा तथा आविर्भवसि प्रकाशसे ग्लानिं तेषां दुःखानि धुनोषि निवारयसि (धूञ् कम्पन इति लट्) इतीत्यध्याहार्यम्। तव यशः कीर्तिः न किमुज्जिहीतां प्रसर्पतु न किम्। तेन किमित्यत आह—अमराः ईर्ष्याकुलत्वम् असूया-क्रान्तत्वम् अश्नुवीरन् न किं भजेरन्न किम् (अशूङ्व्याप्ताविति लङ्) मर्त्या अप्यस्मानुपेक्ष्य केवलशिवाख्याकीर्तनबलेन मुक्ता भवन्तीति। असङ्कल्पपूर्वकं पूर्वपुण्यवासनया मनुष्यमुखे स्थित्वा तान् तारयतीति भावः ॥

महाजनक्षुण्णकर्मादिमार्गमुत्सृज्य मां त्वमेक एव निर्विघ्नासीत्याख्याया आशङ्कायामाह—

**मदनहन्त्रभिधे तव निर्झरा**
**मधुसुधालहरीमतिशेरते ।**
**कृतधियो विहरन्ति च तेष्वमी-**
**ष्वरसिकोऽत्र हतोऽस्म्यहमेककः ॥ ४८ ॥**

मदनेति । हे मदनहन्त्रभिधे तव निर्झराः मधुसुधालहरीं प्रवाहम् अतिशेरते अतिक्रम्य वर्तन्ते (शीङ्स्वप्न इति लट्) अतिरतिक्रमणे चेति द्वितीया । मधुसुधयोः काम्यफलत्वात् नश्वरत्वात् मादकत्वाच्च ताभ्यां मोक्षसाधनीभूतनामामृतमुत्कृष्टमिति भावः । तेषु नामप्रवाहेषु कृतधियो निश्चितबुद्धयः अत्यर्थे चकारः । विहरन्ति आयत्ता भवन्ति । अमीष्वेवं विहरत्सु मध्ये अत्र विहरणे अहमेककः एक एव अरसिकः रसानभिज्ञः नामब्रह्मरसानभिज्ञ इति यावत् । एवं सन् हतोऽस्मि वञ्चितोऽस्मि । शिवादिवत् नामब्रह्मणः यावद्रसानुभवः स्वस्य नास्तीति विषीदतीति भावः । अथवा स्वस्य यावद्रसानुभवे सत्यपि अहं कियान् तादृशरसानुभवकर्मणि (इति) विनयं दर्शयति । तथा च **श्रीमद्रामायणे** (सु. ६८. २१.)—"मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ" इति । तथा च **रामतापिन्यां**—"श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः। मन्वन्तरसहस्रं तु जपहोमार्चनादिभिः" । तथा च **पुराणे** "जानाति राम तव नामरुचिं महेशः" इत्यादि ।

अत्र महद्भिरप्यपरित्यक्तत्वरूपहेतुना माधुर्यातिशयस्य अनुमितत्वादनुमानालङ्कारः। अनेनालङ्कारेण मधुसुधयोः नामामृतस्य च यद्यपि माधुर्येण वा लभ्यत्वेन वा साम्येऽपि अस्य मोक्षसाधनत्वात् व्यतिरेको व्यज्यते॥

अयं भक्तः शिवादिवन्मां नोपास्ते इति मया श्रीशिवाख्याश्रयेण नाद्यापि किमपि लब्धमित्युभयोर्वैरस्यतः परस्पराश्रयाश्रयीभावविरहः सम्भवेदित्यत आह—

**प्रदाय त्रैलोक्यश्रियमथ विमुक्तिश्रियमपि**
**त्वमन्तर्लज्जार्ता भवसि किममुष्मै कृतमिति।**
**व्यथैषा दिष्ट्या त्वद्रसिकतिलकैस्ते परिहृता**
**विना त्वामीशाख्ये न किमपि यदेषां रतिपदम्॥**

प्रदायेति। हे शिवाख्ये अमुष्मै भक्ताय त्रैलोक्यश्रियमपि (स्वार्थेऽयङ्) विमुक्तिश्रियमपि प्रदाय दत्वा मया भक्ताय किं कृतं न किमपीत्यर्थः। इति लज्जया आर्ता आकुला भवसि। ते तव अन्तर्व्यथा एषा त्वद्रसिकतिलकैः त्वद्रसाभिज्ञवर्यैः दिष्ट्या पुण्यफलेन परिहृता निवारिता। कुत इत्यत आह विनेति। यत् यस्मात् एषा त्वच्छरणानां सुखदुःखयोरपि त्वां विना रतिपदं भक्तिस्थानं न किमपि भवति। त्वदन्यत्र किमपि रोचत इति भावः। अत्र शिवाख्यातद्भक्तयोश्च परस्परोपकार्योपकारकत्वदर्शनात् अन्योन्यालङ्कारः "अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्" इति। विनोक्त्यनुप्राणितश्च। आख्यायां लज्जार्त्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः।

"सम्बन्धातिशयोक्तिः स्यात् अयोगे योगकल्पन"मिति। अनेन वाक्यार्थेन प्रस्तुतेन शिवाख्यातद्भक्तवृत्तान्तेन अप्रस्तुतमातृपुत्रवृत्तान्तप्रतीतेः समासोक्तिर्व्यज्यते ॥

शिवाख्यायां स्वस्य महासक्तिमत्त्वं प्रकटयति—

**जन्माऽस्य वार्यमिति ते जननि प्रसादः**
**जायेत चेन्मयि तदस्तु शिवाभिधे नः ॥**
**त्वन्निष्ठताभरनिरन्तरतातिरम्यं**
**यज्जन्म तन्मम न जीर्यतु ते नमोऽस्तु ॥ ५० ॥**

जन्मेति। हे शिवाभिधे जननि अस्य भक्तस्य जन्म उत्पत्तिः वार्यं निवर्त्यमिति प्रसादोऽनुग्रहः जायेत उत्पद्येत चेत् (जनिप्रादुर्भाव इति सम्भावनायां लिङ्) स प्रसादः तत् तथाऽस्तु (आमन्त्रणे लोट्)। तर्हि किमपेक्षसे इत्याशङ्क्याह त्वदिति। त्वयि निष्ठा मनोवृत्तिः तस्या भावस्तत्ता तस्या भरः समृद्धिः तस्य निरन्तरस्य भावः (तस्मात्तल्) तयातिरम्यं यज्जन्म तन्न जीर्यतु न क्षिणोतु (जृधातोर्लोट्)। तथा च **पुराणं**—"कीटा नागा" इत्यादि। तथाकरणे त्वं मम किं करोषीत्याशङ्क्याह—त इति। ते तुभ्यं नमोऽस्तु मोक्षापेक्षया आख्याभक्तजन्मोत्कृष्टमिति भावः। अत्र दुष्टस्य जन्मनः शिवाख्याकीर्तनसुखलाभाय प्रार्थितत्वात् अनुज्ञालङ्कारः। अनेनालङ्कारेण शिवाख्याकीर्तकस्य मोक्षानादराभिव्यक्तेः प्रतीपालङ्कारो व्यज्यते। "अन्योपमेयलाभेन तथान्यस्याप्यनादर" इति ॥

सर्वेऽपि देवा यथाशास्त्रं यथोपासनं यथाशक्ति फलं वितरन्ति न तथा शिवाख्येत्याह—

**विश्वाधिनेतुरखिलार्थविदः स्मरारे-**
**रज्ञाततां मदघराशिममुं नयन्ती ।**
**मां त्रायसे मदनहन्त्रभिधेऽम्ब कस्ते**
**चातुर्यसाहसभरौ चतुरोऽभिधातुम् ॥ ५१ ॥**

विश्वेति । हे मदनहन्त्रभिधे विश्वाधिनेतुः विश्वेश्वरस्य अखिलार्थविदः सर्वज्ञस्य स्मरारेः सर्वप्रतिबन्धकनिवर्तकस्य अमुं सञ्चितं मदघराशिं मम पापसमूहम्, अज्ञाततामविदितभावम् । अनेन शिवाख्याभक्तस्य पापक्लेशोऽपि नास्तीति व्यज्यते । तथा च **भागवते**—"नास्ति पातकमहो कलिकाले" इति । नयन्ती प्रापयन्तो सती मां त्रायसे रक्षसि (त्रैङ् पालन इति लट्) । अर्थसिद्धमघराशेरपादानत्वम् । यथाशास्त्रं फलदातृननादृत्य मां स्वदधीनं करोषोति भावः । तथैव **भगवत्पादाः**—'अविद्यावद्विषयाणि शास्त्राणि' (सू. भा. १-१-१) इति । हे अम्ब ते तव चातुर्यसाहसभरौ चातुर्यं स्वाभिप्रायानुगुण्येन परमनोनाटनम् । अनेनास्या धीचोदकत्वं व्यज्यते । बाधकानालोचनपूर्वकं स्वाभिमतनिर्वाहः साहसम् । तयोर्भरौ समृद्धी तावभिधातुं वक्तुं चतुरः समर्थः कः न कोऽपीत्यर्थः । अथवा कः ब्रह्मा चतुरः काकुः । शिवादयः सर्वेऽपि तव चातुर्यसाहसभराधीना इति भावः । अत्र आख्याचातुर्यसाहसयोः ज्ञात्रसम्भवात् असम्भवालङ्कारः । "असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णन" मिति ॥

शिवाख्याया एतादृशस्वभावं विज्ञाय तद्भजनप्रकारमेव विवृणोति---

**प्रसीद गिरिशाभिधे प्रदिश मन्मतावम्बया**
**सह स्फुरणमूर्जितं सततमिन्दुमौलेर्विभोः ।**
**तथानिशमिहासिकां तव मदीयजिह्वाञ्चले**
**ददस्व मम काङ्क्षितद्वयमिदं त्वदेकास्पदम् ॥**

प्रसीदेति । हे गिरिशाभिधे त्वं प्रसीद अम्बया सह (सहयुक्ते अप्रधान इति तृतीया) इन्दुमौलेः इन्दुः मौलौ शिरसि यस्य । विभोर्व्यापकस्य । स्फुरणं ज्ञानम् ऊर्जित बलवत्तरम् मन्मतौ मदीयबुद्धौ प्रदिश निवेशय (दिश अतिसर्जन इति लोट्) । तथा मदीयजिह्वाञ्चले मद्रसनाग्रे तवासिकां स्थितिं (धात्वर्थनिर्देशे ण्वुल्) अनिशं प्रदिशेत्यनुषज्यते । इन्दुमौलिरिति भगवन्नाम्नामुपलक्षणम् । हृदये साम्बशिवसंस्मरणं जिह्वायां तत्कीर्तनं चास्त्विति भावः । "यद्धि मनसा ध्यायति तद्वाचा वदतो"ति श्रुतेः । त्वमेवैका मुख्यमास्पदम् आश्रयो यस्य तदिदं काङ्क्षितद्वयमभिलषितयुगलं ददस्व समर्पय (दद दान इति लोट्) । अत्र सहोक्तिः "सहोक्तिः सहभावश्चेत् भासते जनरञ्जनः" । अनेन वाक्यार्थेन हृदयस्फूर्तिपूर्वकभगवन्नामकीर्तनस्यातिशयो व्यज्यते ॥

श्रेयांसि बहुविघ्नानीति न्यायात्कथमेतत्पूर्वोक्ताभिलषितद्वयं घटेतेत्याशङ्क्याह—

**न संस्फुरतु काङ्क्षतः स्फुरणमीश्वराख्ये कथं**
**हृदि त्वदनुगस्य तद्भ्रुकुटिकिंकरः शङ्करः ।**
**चरन्तु विषया हरस्फुरणरोधिनो हृद्यमी**
**कथं कथय गर्जनैर्जननि तर्जयन्त्यां त्वयि ॥५३॥**

नेति। हे ईश्वराख्ये तव स्फुरणं काङ्क्षतो मम त्वदनुगस्य नामकीर्तकस्य । तद्भ्रुकुटिः सा चासौ भ्रुकुटिश्च भ्रूभङ्गः "भ्रुकुटिर्भ्रूकुटिः स्त्रिया"मित्यमरः । तस्याः किङ्करः शङ्करः कथं न स्फुरतु न प्रतीतो भवतु स्फुरत्येवेत्यर्थः। विघ्नेश्वरजनकस्फूर्त्या न कश्चिदप्यन्तरायो भवतीति भावः । तत्कुतः ? त्वयि गर्जनैः हरहरेति घोषणैः तर्जयन्त्यां भर्त्सयन्त्यां सत्यां हरस्मरणरोधिनो भगवन्नामस्मरणनिरोधकाः अमी विषयाः स्वर्गादयः कथं हृदये चरन्तु स्फुरन्तु (चरगतिभक्षणयोरिति लोट्)। कथय त्वं वद । गर्जनेन सर्वोऽन्तरायः दूरीभवतीति भावः । अत्र प्रस्तुतशिवनामध्वनिकुण्ठितसर्वकुण्ठनोद्यमेन अप्रस्तुतप्रभुगर्जनदूरीकृतशत्रूद्यमवृत्तान्तप्रतीतेः समासोक्तिः ॥

एतावत्यापि प्रार्थनया त्वं न प्रसीदसि चेत् त्वत्तोऽपि मम महती गतिरस्तीत्यत आह—

**ममायमवबुध्यतां मधुरिमाणमूर्जस्वलं**
**कदापि विजहातु मां न रसनैतदीयेति मे ।**
**दयस्व गिरिशाभिधे ननु ददीत सा मेऽथवा**
**तदेतदभिकाङ्क्षितं त्वदनुगेषु जात्वानतिः ॥**

ममेति। अयमूर्जस्वलम् (अतिशये वलच्) "ऊर्जस्वलः स्यादूर्जस्वी" त्यमरः। मधुरिमाणं माधुर्यं भावे इमनिच्। अवबुध्यतां जानातु (बुध अवबोधन इति लोट्)। एतदीया रसना भक्तसम्बन्धिजिह्वा मां शिवाख्यां कदापि न विजहातु न त्यजतु इति गिरिशाभिधे दयस्व दयां कुरु (देङ्धातोर्लोट्)। सा दया तदेतत्पूर्वोक्तमभिकाङ्क्षितं ददीत ननु दद्यादेवेत्यर्थः (दाञो लङ्)। न कोऽपि मम काङ्क्षितद्रव्यं दातुं नास्तीत्या-[शङ्कया] ह—अथवेति। पक्षान्तरे त्वदनुगेषु नामकीर्तनपरेषु विषये जातु सकृदानतिः प्रणामो ददीत ननु। काङ्क्षितद्रव्यमित्यनुषज्यते। यद्वा हे गिरिशाभिधे अयं भक्तः ऊर्जस्वलं मधुरिमाणं नावबुध्यताम् एतदीया रसना मां विजहातु इति दयस्व। तर्हि त्वदभिमतसिद्धये कमन्य-माश्रयसे इत्याशङ्क्याह—अथवेति। प्रसिद्धान्यवस्तुद्योतकमव्यय-मिदम्। अन्यत्प्राग्वत्। त्वदपेक्षया त्वद्भक्ता अतिदयालव इति भावः। तथा **चाचार्यचरणाः** (मोहमुद्गर ६.)—"त्रिजगति सज्जनसंगति-रेका भवति भवार्णवतरणे नौका" इति। आख्याश्रयं निषिध्य तद्भक्ता-श्रयस्य कीर्तितत्वात् प्रतिषेधालङ्कारः। "प्रतिषेधः प्रसिद्धस्य निषेधस्या-नुकीर्तन" मिति। अनेन वाक्यार्थेन कवेर्यया कया च विधयाऽपि शिवाख्याश्रय एवाभिरुचिरिति व्यज्यते॥

अयं न मत्प्रसादविषयः, अतस्त्वमपि तस्मै न प्रसीदेति शिवाख्या स्वभक्तं प्रतिषिध्येदिति भियाशङ्क्याह—

**मनागपि मनः स्पृशेन्मम यदेदमर्थान्तरं**
**तदा द्रुतमुपैष्यहो त्वमपहाय जिह्वां मम ।**
**तथाऽम्ब गिरिशाभिधे तव न विप्रलम्भः क्षमो**
**भणेत् क इह किं प्रसूर्भवति विप्रलब्ध्री यदि ॥**

मनागिति । मम मनो यदा यस्मिन्काले इदं परिदृश्यमानमर्थान्तरं शिवाख्याव्यतिरिक्तविषयजातं मनागपि स्पृशेत् विषयीकुर्यात् । तदा त्वम् जिह्वामपहाय त्यक्त्वा आहृतं स्वीकृतं विषयजातम् उपैषि प्राप्नोषि (इण् गताविति लट्) । अहो आश्चर्यम् उपक्रमोपसंहारवैपरीत्यादेवम् । हे अम्ब तव तथा पूर्वोक्तप्रकारेणैव विप्रलम्भो वञ्चना न क्षमो नोचितः । अहं तथैव भवेयम् त्वं किं कुर्या इत्याख्याया आशङ्कायामाह—भणेदिति । प्रसूर्माता विप्रलब्ध्री यदि वञ्चिका चेत् इह लोके को जनः कि भणेत् वदेत् (भणधातोर्लिङ्) न किमपीत्यर्थः । मातुरपराधः पुत्रेण न प्रकटनीय इति भावः । अहो आश्चर्यम् । अनेकेषु आश्रितेषु सत्सु एकस्मिन्विषये आख्याया औदासीन्यादेवम् । अत्र आख्याया विप्रलब्धृत्वसम्भावनया सम्भावनालङ्कारः ॥

अहं तावत् वञ्चकस्वभावैव त्वं मामुत्सृजेत्याशङ्कायामाह--

**यदा त्वमपयासि मां जननि वञ्चयित्वा स्वयं**
**तदा नियतमाहरोपहरमुख्यसञ्जल्पनैः ।**
**यथा कलितवञ्चनः पुरहराभिधे त्वामहं**
**नयानि रसनां तथाऽस्तु विधेः प्रसादो मयि ॥**

यदेति। हे जननि पुरहराभिधे मां वञ्चयित्वा यदा अपयासि मदपराधं विना गच्छसीत्यर्थः। तदा कलितवंचनः कृतकपटः त्वाम् आहर-उपहर शब्दः मुख्यं तात्पर्यं विषयोभूतम् एषां तादृशैः सञ्जल्पनैः भाषणैः जिह्वां नयानि। तथा च **मनुः**—"मूर्खे मौर्ख्यं शठे शाठ्यं माया मायाविनि स्वयम्" इति। तत्तात्पर्येण स्वकीर्तनासम्भवेऽपि प्रकारान्तरेण वा किञ्चित् द्वारीकृत्य त्वामेवानुकूलयामीति भावः। "मातृदेवो भव" इति श्रुतेः (तै. उ. १. ११.)। अत्र आहरोपहर इति व्याजशब्दव्यवहारेण स्वाभिमतस्य साधितत्वात् पर्यायोक्त्यलङ्कारः। "पर्यायोक्तं तदप्याहुः यद्व्याजेनेष्टसाधनम्"। अनेन वाक्यार्थेन कपटभक्त्यापि शिवाख्यैवोपास्येति व्यज्यते। तथा च **भागवते** (६. २. १४.)— "साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा। वैकुण्ठनामग्रहणमशेषाघहरं विदु"रिति॥

मम प्रकारान्तरेणापि संसारतरणोपायोऽस्तीत्यत आह—

**शरणितवन्तः खलु ये**
**शशिकन्दलशेखराभिधे भवतीम्।**
**तच्चरणाम्बुजविहरण-**
**संसरणं सुरघटाकिरीटतटे॥ ५७॥**

शरणितवन्त इति। ये त्वां शरणितवन्तः शरणं प्राप्ताः। तच्चरणाम्बुजविहरणसंसरणं शिवाख्याभक्तचरणारविन्दसेवार्थं पुनर्जन्म। अन्यत्स्पष्टम्। शिवाख्याभक्तसेवाऽपि संसारतरणकारणमिति

भावः । संसरणस्य दुष्टत्वेऽपि शिवाख्याभक्तचरणसेवारूपगुणदर्शनादनुज्ञालङ्कारः । शिवाख्याशरणागतेः संसृतिक्षरणस्य च ऐक्यारोपान्निदर्शना ॥

तेषां दुर्लभं नास्त्येवेत्याशङ्क्याह—

**शरणं जगतो ह्येते**
**शरणितवन्तः शिवाभिधे ये त्वाम् ।**
**अभिलषितं यदमीषा-**
**मसुलभमिति तन्न किं वियन्नलिनम् ॥**

शरणमिति । हे शिवाभिधे ये त्वां शरणितवन्तः (क्तवतुः) ते जगतः शरणं रक्षकम् । तत्कुतः? असुलभमिति अमीषां त्वत्प्रसादपरिगृहीतानामभिलषितमसुलभमिति यत् तत् वियन्नलिनं न किं गगनारविन्दं न किमिति काकुः । यथा गगनारविन्दं नास्ति तथा भक्तानां दुर्लभं नास्तीति भावः । अत्र उभयोर्वाक्यार्थयोः सदृशयोरैक्यारोपान्निदर्शनालङ्कारः ॥

मत्संरक्षणार्थं त्वद्भक्ताः सन्ति त्वं मे मास्तु इत्यभिसन्धिपूर्वकां शिवाख्यावज्ञां वदन् कविः स्वस्य किञ्चिद्दोषभिया उपक्रमोपसंहारन्यायस्मरणेन च शिवाख्यारूपिणीं मातरमेव प्रार्थनापूर्वकं शरणयति—

**महेशे तत्सङ्गिष्वपि कृतिषु पाषाणहृदये**
**वराके मय्यस्मिन्प्रविदधति सन्तः प्रणयिताम् ।**
**कथंकारं मातर्दलय तदिहेमां मम हृदो**
**दृषत्तामत्राम्ब स्मरभिदभिधे त्वं खलु गतिः ॥**

महेश इति । महेशे शिवे सति तत्सङ्गिषु शिवमूर्त्युपासकेषु कृतिषु सत्सु अस्मिन् पाषाणहृदये शिलाकठिनचित्ते वराके त्वदनादरणान्निन्द्ये मयि सन्तः साधवः शिवाख्याभक्ताः इत्यर्थः प्रणयितां मैत्रीं कथङ्कारं प्रविदधतु कुर्वन्तु । मातृनिन्दकं न कोऽपि रक्षेदित्यर्थः । तत् तस्मात् मम हृदः हृदयस्य (पद्दन्न इत्यादिना हृदादेशः) दृषत्तां काठिन्यं दलय वारय । मातुः शिशुमनोरञ्जनम् आवश्यकमिति भावः। निर्णीतमिति वा । अतोऽत्र संसारे स्मरभिदभिधे विषयप्रवर्तकनिवर्तकाख्ये त्वमेव गतिः खलु । यद्वा सन्तः मयि प्रणयितां मा प्रविदधतु इत्यनुषज्यते। यतः स्मरभिदभिधे स्मरः स्मरणं विषयस्मरणभिदाख्ये। लोके तावत् अनेकैरुपलापितोऽपि शिशुः मातृदर्शनानन्तरं मां विस्मृत्य कुत्र स्थितमित्यभिप्रायपूर्वकं किञ्चिद्रोदनस्मितकलिलमुखः सन् यथा मातरमेवानुसरति तद्वदिति सम्बोधनेन गम्यते। त्वं खलु गतिः शरणं जनस्येति शेषः ममेति वा। तत् तस्मात् त्वत्कीर्तनविषयं मम हृदो दृषत्तां दलय अनाद्यविद्याजनितहृदयग्रन्थिं शिथिलयेत्यर्थः। तथा च **ब्रह्माण्डपुराणे** "किं तात वेदागमशास्त्रविस्तरै" त्यादि । किं च "शिवेति द्व्यक्षरं नाम यस्य वाचि प्रवर्तते । कुण्ठीभवन्ति राजेन्द्र महा-

पातककोटयः'' इत्यादीनि प्रमाणानि बहुधा बहूनि सन्ति। विस्तरभयान्न लिख्यन्ते। तथा च सन्तः त्वदवलम्बिनि शिवे शिवव्यक्त्युपासकेषु त्वद्भजनार्हविद्वत्सु च प्रणयवन्तः न त्वन्येषु मैत्र्याः समानधर्मविषयत्वादित्यर्थः। अनर्हस्य मम हृदयग्रन्थिभेदनाय त्वमेव गतिरिति भावः। "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'' इति श्रुतेः (मुण्डक. २. ८.)। अत्र हृदयग्रन्थिभेदनरूपविशेषेण शिवाख्यायाः सर्वलोकगतित्वसामान्यस्य उक्तत्वादर्थान्तरन्यासः। अनेन वाक्यार्थेन कविः नामब्रह्मैकतानतां प्राप्तवानिति व्यज्यते ॥

साहेन्दोः पुरि वीरराघवसुधीवैद्येन किञ्चिद्धना-
याऽऽदानाद्भलदाशयेन जननाद्यार्त्याश्रयेभ्यः कृतम्।
हृत्कर्णास्यरसायनं सुरुचिरं बह्वर्थसंसाधितं
भूमौ संसृतिरोगशान्तिदमिदं गृह्णन्तु सर्वे जनाः ॥

॥ इति भवरोगभेषजं नाम शिवाख्याव्याख्यानं सम्पूर्णम् ॥

॥ शुभमस्तु नित्यम् ॥

अनेन व्याख्यात्रा त्यक्ता कोशान्तरेषु दृष्टा आख्याषष्ट्यन्तर्भूताः श्लोकाः—

अजस्रं तन्वानाः श्वसितुमपि मामक्षममिमं
कदा वा क्रामन्तु प्रतिहतकरालोपहृतयः ।
पुरारातेराख्ये पुरभिदनुभूत्यूर्मिलसुख-
प्रतीपेभध्वंसप्रबलहरयस्त्वल्लहरयः ॥

(१७-१८ एतयोर्मध्ये)

न कर्माध्वन्योऽहं भगवति न वा भक्तिपथिकोऽ-
स्म्युपादेयः कोऽपि स्फुरति गुणलेशोऽपि न मयि ।
असंख्याता दोषाः किमत इह दौरात्म्यमितर-
तदम्ब त्वत्तोऽन्या न जगति शिवाख्ये मम गतिः ॥

(३८-३९ एतयोर्मध्ये)

शिवाख्ये मा भैषीः पदममरनेतुर्ननु भवे
दमुष्मै दातव्यं सरसिजभुवो वा पदमिति ।
समीहे नाहं तत्किमपि सहसाभ्येहि रसनां
ममेमां मा हासीः समभिलषितं मे पुनरिदम् ॥

(४८-४९ एतयोर्मध्ये)

---

# शुद्धाशुद्धपत्रिका

| पुटं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १२ | स | सा |
| ५ | १३ | पदार्थ संभा...ने | पदार्थसंभात्रने- |
| ,, | १३ | । अनेक | । दिष्टथा अनेक |
| ६ | २१ | सर्वज्ञतामेदबुद्धिमत्वं | सर्वज्ञताऽभेदबुद्धिमत्त्वं |
| ७ | ३ | ब्रह्मभाव | ब्रह्मादिभाव |
| ,, | १० | मवर्ती | मवर्ती |
| ९ | ३ | भाववत्वं | भाववत्त्वं |
| १४ | १ | पुरभित् | पुरभित् हि |
| १४ | १९ | । हि यतः....ज्यते (छा.७.२४) | (छा.७.२४) । हि यतः....ज्यते |
| १५ | ११ | । मेरुधन्वा | मेरुधन्वा |
| ,, | १२ | नाम्ना | नाम्नः |
| १८ | ४ | इति शब्द | इति शतशब्द |
| ,, | १४ | पुरा | त्रिपुरा |
| २० | २ | परिणाम | परिणामि |
| २२ | १२ | कीर्तनस्य | कीर्तकस्य |
| २३ | १९ | मत्त्वं सम्य | मत्त्वं । सम्य |
| २३ | २० | कामजेतृत्वत् | कामजेतृत्वात् |
| २४ | १८ | वारशि | वाराशि |
| ३१ | ७ | इति । व्यज्यते | इति व्यज्यते । |
| ,, | २० | कीर्तक | कीर्तन |
| ३२ | ३ | अन्यद्दु | अन्यद्रु |

| पुटं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३ | ४ | जगत् कर्मलोकं शमनेन | शमनेन जगत् कर्मलोकं |
| ३७ | ४ | तेषां मयि | तेषामयि |
| ३९ | ११ | त्वयैवेके | त्वयैवैके |
| ४० | १० | [illegible] | प्रणश्यति |
| ४० | १८ | [illegible] | रसविदः |
| ४० | २० | [illegible] | स्रष्टृ |
| ४१ | २० | [illegible] | अन्वर्थत्व |
| ४५ | १० | मिर्मुक्तो | निर्मुक्तो |
| ४२ | ९ | नो | । न |
| ५३ | ६ | कमल नयने | कमलनयने |
| ,, | १८ | विघ्न भिया | विघ्नभिया |
| ५६ | ४ | देषको | देव को |
| ,, | १० | धर्मान् । परि | धर्मान्परि |
| ,, | २० | सारालङ्कारः" | सारालङ्कारः । |
| ५७ | ९ | उल्लसन्त्यां प्रकाशमानया | उल्लसन्त्या प्रकाशमानया |
| ५८ | १ | कोऽपीत्यर्थ | कोऽपीत्यर्थः |
| ,, | ५ | कलिसंतरण | (कलिसंतरण |
| ६६ | ९ | ऊर्जित | ऊर्जितं |
| ६८ | ७ | [शङ्कया]ह | शङ्कयाह |
| ६९ | २ | तदाद्रुत | तदादृत |
| ७२ | १९ | विस्तरे"त्यादि | विस्तरे"रित्यादि |

---



Sreevathsa Press, Madras 14. Q. H. M. S. 299
Copies 350. D. 5-4-'48.

श्री चन्द्रमौळीश्वराय नमः



श्रीकामकोटि कोशस्थान प्रकाशिता ग्रन्थाः

## चित्रैः भाषान्तरानुवादैः आचार्य श्रीमुखैश्च समुद्भासिताः

| | | |
|---|---|---|
| १ | भजगोविन्दस्तोत्रम्—ए. एस्. नटराज अय्यर् | ०—४—० |
| २ | मुकुन्दमाला—साहितोवल्लभ टि. सुन्दराचार्यार् | ०—६—० |
| ३ | प्रश्नोत्तररत्नमालिका—श्रीमदाचार्यपादाः | ०—२—६ |
| ४ | ,, आन्ध्रानुवादः | ०—२—६ |
| ५ | देवीस्तोत्ररत्नाकरः | ०—१५—० |
| ६ | आनन्दसागरस्तवः—य. महालिङ्गशास्त्री | ०—१२—० |
| ७ | आख्याषष्टिः—डाक्टर् वे. राघवन् | ०—१०—० |
| ८ | शिव पादादिकेशान्तादि शिवस्तोत्राणि— वि. एच्. सुब्रह्मण्य शास्त्री | ०—१२—० |
| ९ | अद्वैताक्षरमालिका—५२ अद्वैतपराः संस्कृतो [पन्यासाः | ५—०—० |
| १० | अद्वैतसभासुवर्णोत्सवस्मृतिमाला २३ अद्वैतपरा द्रविडोपन्यासाः | २—८—० |